दवाग्नेः अरिसमुदायाच्छत्रुसमूहात्त्रिजगत्त्रैलोक्यं सदा अवतः पालयतो रक्षतो वा । यद्वा कीदृशाद्यादवतः दुःसोढा या पापाटवी तस्या दवाग्नेरिति रूपकम् । । पुनः कीदृशात् अरिसमूहात्त्रैलोक्यमवत इति । पुनः कीदृशात् स्मरेण कामेनदायादवतः पुत्रवतः "दायादौ सुतबान्धवौ" इत्यमरः अस्मिन्काव्य आर्यागीतिश्छन्दः ॥ १ ॥

योऽजनिनागोपीतश्चचारयोबल्लवाङ्गनागो
पीतः ॥ भूर्येनाऽगोपीतःकंसाद्योद्विषमे
वनागोपीतः ॥ २ ॥

य इति—यः ना पुरुषः गोपीतःयशोदातः अगोपीतो देवकीतो वाऽजनि जातः। यः वल्लवा आभीरास्तेषामङ्गनास्तासां गोभिर्नेत्रैः पीतः सन् सादरमवलोकितः सन् चचार । "दिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्यां स्त्रियां पुंसि गौः"इत्यमरः। येन भूरगोपि अरक्षि । यः कंसाद्द्विषमेव इतः प्राप्तः । येन नागोपि कालियः कुवलयापीडोपि वा इतः दूरीकृतः । यद्वा । इतोऽस्मात्कंसाद्भयं, केवलं न । अपि तु आगोपि अपराधमपि इतः प्राप्तः ॥ २ ॥

यदरिपुसन्नामानस्थितयोऽभिमुन्नमुदलसन्ना
मानः ॥ यत्रससन्नामान स्युर्भवभाजश्चप
ठितसन्नामानः ॥ ३ ॥

यदरिष्विति-यस्याऽरिषु मानस्थितयोऽभिमानाद्यवस्थाना-

नीत्यर्थः। यद्वा मानश्चित्तसमुन्नतिः स्थितिर्मर्यादा। मानश्च स्थितयश्चेति द्वन्द्वः। सन्ना अवसन्ना जाता इत्यर्थः। नाम सम्भावनायाम्। अनः शकटं येन नुन्नं प्रेरितं सत् उदलसत् चचालेत्यर्थः। यत्र कृष्णे ससन्नामाः नमनं नामः संश्चासौ नामश्चेति सन्नामः, सन्नामेन सह वर्त्तमानाः ससन्नामाः। कृतसम्यङ्नतयः सांसारिका न स्युः। कीदृशाः पठितसन्नामानः। सन्तिच तानि नामानि च पठितानि वारं वारं गृहीतानि सन्नामानि गोविन्दादीनि यैस्ते पठितसन्नामानः। यद्वा। यस्मिन्मा लक्ष्मीः ससन्ना संनिकटा। "समीपे निकटासन्नसंनिकृष्टसनीडवत्" इत्यमरः। तेनाऽदूरदेशान्तरवर्त्तित्वविशिष्टा समीपस्थितेति यावत्। आसन्न इति आङुपसर्गसहितः। अयं निरुपसर्गः। च पुनः पठितसन्नामानो भवभाजो न स्युः॥ ३॥

समनिन्दानवनाशंजनताऽलिकुलंयथैवदा
नवनाशम्॥ द्विरदाद्यनवनाशंजगच्चलभ
तेयतःसदाऽनवनाशम्॥ ४॥

समेति—जनता जनसमूहः यतो राज्ञः शं कल्याणं लभते प्राप्नोति। च पुनः जगत् दानवानां दैत्यानां नाशं मृत्युं यतो लभते। कीदृशी जनता समनिन्दानवना। णु स्तुतौ धातोर्ल्युटि नवनं स्तुतिः। निन्दा च नवनं च निन्दानवने समे निन्दानवने यस्याः सा। पुनः कीदृशं सदा अनवनाशं

अवनं रक्षणं तस्य आशा अवनाशा न विद्यते अवनाशा यस्य तत् अनवनाशम् । यथा अलिकुलं कर्त्तृ हस्तिसकाशाद्दानवनाशं प्राप्नोति दानवनं दानजलं तस्य आशनम् आशस्तं प्रातराशं सायमाशंच तद्वत् ॥ ४ ॥

कुलकम्—अस्तिसराजानीतेरामाख्योयो
गतीःपराजानीते ॥ यस्य रराजानीते
रत्नानिजनाकुलेधराजानीते ॥ ५ ॥

अस्तीति— स रामाख्यो राजास्तीत्यन्वयः । रामोभिरामः सुन्दर इति यावत् । आख्या नाम यस्य सः । यः नीतिनयस्य परा उत्कृष्टा गतीः जानीते जानाति । अनीतेः ईतिरहिततया । हेतौ पञ्चमी । यस्य कुले सति । राज्यं कुर्वति सतीति शेषः । जनः रराज सुखी बभूव । यद्वा । कीदृशस्य यस्य अनीतेः ईतिरहितस्य ईतयोऽतिवृष्ट्यादयः । कीदृशे कुले धराजानि भूम्युत्पन्नानि रत्नानि इते प्राप्ते ॥ ५ ॥

यःसेनानावाऽरिप्रकरनदीःशरमयंधुनाना
वारि ॥ अतरन्नानाऽवारिव्यसनैर्यद्भुवि
वनंचनानावारि ॥ ६ ॥

यइति—यः सेनानावा सैन्यनौकया अरिप्रकरनदीः शत्रुसमूहनदीरतरत् तीर्णवान् । कीदृशीर्नदीः शरमयं बाणमयं वारि धुनानाः कम्पयमानाः । यद्भुवि ना पुरुषः

व्यसनैर्न अवारि इति काकुः। आपि तु वारित एव। च पुनः यस्य वनं नानावारि नानागजबन्धनयुक्तम्। "वारी तु गजबन्धनी" इत्यमरः॥ ६॥

अपियोदायादायक्षयप्रदोऽहसिसतांयदा
यादायः॥ करमाऽऽदायाऽऽदायश्रियो
ऽधिरधिराजऽमसिगदायादायः॥ ७॥

अपीति—यः अंहसि पापे जाते दायादाय पुत्रायाऽपि क्षयप्रदः नाशकर्त्ता। यदायाः यस्य आया धनागमनानि सतां दायः न्यायप्राप्तो भागः। पुनश्च यः अधिराजं राजानमधिकृत्य करम् आदाय आदाय श्रियः अब्धिः। कीदृशः असिगदायादाः असिश्च खड्गः गदा च असिगदे यादांसि जलजन्तवो यत्र स तथा॥ ७॥

अविदूराजादित्याकृताऽल्पभेदैवभूःसरा
जादित्या॥ येनसराजादित्यात्रिदिवात्सं
युक्तशत्रुराजा दित्या॥ ८॥

अवीति—येन भूः त्रिदिवात्स्वर्गादल्पभेदैव कृता। कीदृशी भूः। अविदूराजा अविदूरे निकटे अजो विष्णुहरौ यस्याः सा तथा। कीदृशात्त्रिदिवात्। अदित्या देवमात्रा विशिष्टात्। विशेषणे तृतीया। पुनर्भूः कीदृशी सराजादित्या दिताय च्छेदाय हिताः दित्याः न दित्याः अदित्याः

साधव इति यावत् । राजसु क्षत्रियेषु अदित्याः राजादित्यास्तेन सह वर्त्तमाना सा तया सक्षत्रियश्रेष्ठेत्यर्थः । अथवा राजादित्यनामा नलभ्राता तेन सहवर्त्तमाना । यद्वा राज्ञां मध्ये आदित्यो राजादित्यस्तेन युक्तेत्यर्थः । पुनः कीदृशात्रिदिवात् । सराजादित्यात् । राजा चन्द्रः राजा च आदित्यश्च राजादित्यौ ताभ्यां सह वर्त्तमानात् । येन कीदृशेन दित्यासंयुक्तशत्रुराजा दितिर्दानमवखण्डनमिति यावत् । दो अवखण्डने । तया संयुक्तः शत्रुराट् यस्य स तथा तेन सखण्डनशत्रुणेत्यर्थः ॥ ८ ॥

खलसेनानाऽवेद्यः स्वांहोऽब्धौ भुवि च यस्य नानावेद्यः ॥ स्निग्धजनानाऽऽवेद्य प्रयतेऽस्य सुकाव्यविरचनानावेऽद्य ॥ ९ ॥

खलेति–स्निग्धजनान् आवेद्य निवेद्य स्वांहोऽब्धौ स्वकीयं यदंहः पापं तदेव अब्धिस्तत्र सुष्ठु यत्काव्यं तस्य रचना सैव नौर्नौका तस्यै।यस्य रामाख्यस्य अद्य इदानीं प्रयते यत्नं कुर्वे। यस्य कस्य यः खलसेना दुष्टसैन्यं न अवेत् न रक्षेत् । च पुनर्यस्य भुवि संसारे नानावेद्यः नानाप्रकारिका यज्ञभूमिमण्डपप्रदेशाः सन्ति ॥ ९ ॥

अथनिजराज्यंतेनप्रशासिनलेनशत्रुराज्यन्तेन ॥ येनाराज्यन्तेनश्रियादिशो यस्यविहतिराऽऽज्यन्ते न ॥ १० ॥

अथेति—तेन नलेन निजराज्यं प्राशासि शासितम्। कीदृशेन शत्रुराज्यन्तेन शत्रूणां राज्याः शत्रुश्रेण्याः अन्तेन मृत्युना येन दिशः अराज्यन्त। अशोभन्त कीदृशेन इनश्रिया इनवत् सूर्यवत् श्रीः शोभा यस्य स तथा तेन। यस्य च आज्यन्ते आजियुद्धं तस्य अन्ते मध्ये विहतिर्न सर्वत्र जय एवेत्यर्थः॥ १०॥

मूर्त्तिमारसमानांयोदधदायुस्सहस्रमार
समानाम्॥ रुद्रकुमारसमानामजयद्द्वि
पतांपङ्क्तिमारसमानाम्॥ ११॥

मूर्तिमिति—यः समानां वर्षाणां सहस्रमायुः आर प्राप। ऋ प्रापणे धातोः परोक्षायाम् आर। किं कुर्वन् मारसमानां कामतुल्यां मूर्त्तिमाकारं दधत् धारयन्। यश्च द्विपतां शत्रूणां पङ्क्तिं श्रेणीमजयज्जितवान्। कीदृशीम् रुद्रकुमारसमानां रुद्रकुमारः कार्त्तिकेयस्तद्वत्समानां मानेन सह वर्त्तमानाम्। पुनः कीदृशीम् आरसमानां शब्दायमानाम्॥ ११॥

साश्वनियामानयतःश्रेष्ठाविद्यास्तदाश्रया
मानयतः॥ अधिकायामानयतःशत्रा
ऽस्वपियस्यधीर्दयाऽऽमानयतः॥ १२॥

साश्वेति—तदाश्रयास्तस्य नलस्याश्रया ऋतुपर्णप्रभृतयः यतो नलात् श्रेष्ठाः नमन्तीत्यध्याहार्य्यम्। कीदृशात्

निग्रमं नियामः अर्थानियमेन सह वर्तमानाः क्रिया यान्-
यतः आनतः। नियामो निग्रमो यामः इत्यमरः। तस्य 
रुक्माः नयनः नीतितः आक्रामा अनिक आयो तस्य-
मा। कीदृशस्य सुव्रतानि दयान् आनयतः कुर्वतो की-
त्तिर्वां मार्गहितीति शेषः ॥ १२ ॥

अहितानाऽस्मायस्यत्रातायःशरणगामि
नामायस्य ॥ गतनानामायस्यसुतःपि
तावीरसेननामायस्य ॥ १३ ॥

अहितेति।यो नलः शरणगामिनां शरणागतानाम् आय
स्योद्यमं कृत्वा त्राता रक्षिता च पुनः आयस्य यनामयस्य।
यस्य च वीरसेननामा पिता सुतो विख्यातः । कीदृशस्य
गता नानामायाः यस्मात् तस्याआयस्येति यत्तु प्रयत्ने
धातोः क्त्वायां ल्यपि ॥ १३ ॥

भुव्यस्तनोदन्तेनक्षिपतांसयशांसिशोभ
नोदन्तेन ॥ नीतानोदंतेनक्षितिऽभजन्न
ऽहितदन्तिनोदन्तेन ॥ १४ ॥

भुवीति-स नलः भुवि पृथिव्यां क्षिपतां शत्रूणामन्तेन
नाशेन यशांसि अतनोद्विस्तारयामास। च पुनः नोदनं नोदः
प्रेरणमिति यावत् । येन नोदं नीता अहितदन्तिनः शत्रु-
हस्तिनो दन्तेन क्षितिमभजन्मृता इत्यर्थः। कीदृशेन शोभ-

नोदन्तेन शोभन उदन्तो वार्त्ता यस्याऽसौ स तेन । "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः । नुद प्रेरण इति धातोर्नोदः ॥ १४ ॥

सचिवगिरागोपायन्नलःसपृथिवींनिरस्त रागोपायम् ॥ शत्रोराऽऽगोपायंनीत्वाने मुर्महत्तरा गोपा यम् ॥ १५ ॥

सचिवेति—स नलः निरस्तरागोपायं यथा स्यात्तथा सचिवगिरा मन्त्रिवाक्येन पृथिवीमगोपायत् अरक्षत् । रागस्योपायः रागोपायः व्यसनमिति यावत् । निरस्तो रागोपायो यस्यां क्रियायां तत्तादृशम् । महत्तरा गोपा आगोपा यं नीत्वा यं नेमुर्नमश्चक्रुरित्यर्थः गां पृथ्वीं पान्ति ते गोपा राजानः । आगोपायम् आगसः अपराधस्यापायो नाशस्तम् । गोपाः कीदृशाः शत्रोर्मध्ये महत्तराः श्रेष्ठाः । अगोपायदिति गुपू रक्षणे धातोः । "आगोऽपराधो मन्तुश्च" इत्यमरः । "दिङ्नेत्रघृणिभूजले" इत्याद्यमरः । नेमुरिति णमु प्रह्वत्वे धातोर्लिटि बहुवचनम् ॥ १५ ॥

योऽदम्भीमान्याऽऽगाऽधिकोऽथरिपुर्यमे त्यभीमान्यायात् ॥ वैदर्भीमान्यायात्रि जगतिकन्याबभूवभीमान्यायात् ॥ १६ ॥

योऽदम्भीति—भीमान्यायात् भीमभूपालाद्वैदर्भी कन्या

बभूव जाता । अननम् आनः आनोस्यास्तीत्यानी आनी जीवितवान् आयो यस्य निरंतरं धनागमवानित्यर्थः । राजेति यावत् । भीमश्चासावान्यायश्चेति भीमान्यायस्तस्मात् । वैदर्भी कीदृशी या त्रिजगति मान्या पूज्या । स को भीमः योऽदम्भी दम्भरहितः । पुनः कीदृशः आयाद्धनवृद्धेर्हेतोर्मानी अभिमानी । अथ अधिको रिपुः शत्रुर्यमेत्य यन्निकटे आगत्य भीमान् भीतः सन् यायात् प्रपलाय्य गच्छेत् । "भीतिर्भीः साध्वसं भयम्" इत्यमरः । भीमान् मतुप् । यायादिति या प्रापणे धातोः । यत्तु भीमाऽन्यायादित्यत्र भीमादिति पञ्चमीं प्रकल्प्य न्यायात् न्यायेन कन्या बभूवेति व्याचक्षते । तत्र सन्धौ सति नकारद्वित्वं तेन यमकत्वहानिरिति तच्चिन्त्यम् ॥ १६ ॥

महिततमारम्भाभिर्दमयन्तीसदृगुमारमा
रम्भाभिः ॥ दधतीमारंभाभिर्ववृधेसोरुद्ध
येसमारम्भाभिः ॥ १७ ॥

महितेति—दमयन्ती ववृधे वृद्धिं प्राप्ता युवतिर्बभूवेत्यर्थः । कीदृशी । उमारमारम्भाभिः सदृक् सदृशी । उमा पार्वती रमा लक्ष्मीः रम्भाऽप्सरोभेदस्ताभिरुमारमारम्भाभिः । कीदृशीभिः । महिततमारम्भाभिः प्रकृष्टो महितो महिततमः पूजिततम इति यावत् । महिततम आरम्भो यासां तास्तादृश्यस्ताभिः । पुनः कीदृशी भा-

भिः कान्तिभिर्म्मारं कन्दर्पं दधतो धारयन्ती । पुनः कीदृशी ऊरुद्वये रम्भाभिः कदलीभिः समा ॥ १७ ॥

युग्मम्—सारत्नंनारीणांनलःश्रियामजनि निलयनंनारीणाम् ॥ यस्याऽनन्नाऽरीणां मरुभुवमापद्धटाऽवनंनाऽऽरीणाम् ॥ १८ ॥

सेति—सा दमयन्ती नारीणां मध्ये रत्नं श्रेष्ठमजनि जाता । नलश्च नारीणां मनुष्यसम्बन्धिनीनां श्रियां कान्तीनां निलयनं गृहमजनि । नरस्येयं नारी । यस्य चारीणां घटा मरुभुवमापत् प्राप । अवनं नापदिति पूर्वेणैवाऽन्वयः । मरुभुवं कथंभूताम् आरीणां शून्यां धिक्कृतां वा ॥ अरीणां घटा कीदृशी, अनन्ना न विद्यते अन्नं यस्याः सा अनन्ना "अवरीणो धिक्कृतश्च" इत्यमरः ॥ १८ ॥

चकमेसाराजन्यश्रेष्ठंतंतासतेजसाराजन्यः ॥ आत्तविसाराजन्यश्रियोऽधितययाजिताःससाराजन्यः ॥ १९ ॥

चकम इति—सा दमयन्ती तं राजन्यश्रेष्ठं क्षत्रियोत्तमं चकमे कामितवती । स च नलस्तां चकमे इति पूर्वेणैवान्वयः । तेजसा राजन् दीप्तिं कुर्वंश्च । येन जन्याश्रियो युद्धलक्ष्म्यः अधित प्राप्ताः । कीदृश्यः आत्तविसाराः विसरणं विसारः विस्तार इति यावत् । आत्तो गृहीतो विस्तारो याभिस्ताः। यया दमयन्त्या जन्या वध्वो जिताः । कीदृश्यः

ससाराः सौन्दर्य्यसहिताः । "सारः स्थिरांशे सौन्दर्य्ये" इति धरणिः । "युद्धमायोधनं जन्यम्" "समाः स्नुषाजनीवध्वः" इति चाऽमरः ॥ १९ ॥

नाऽऽर्त्तिर्नोद्यानेनप्रभाविहीनेनशोभनोद्यानेन ॥ स्मरजानोऽद्याऽनेनस्फुटमितिगतिमिहनलोऽतनोद्यानेन ॥ २० ॥

नार्त्तीरिति–नलः इति हेतोरिह वने स्फुटं यथा स्यादेवं यानेनाश्वेन गतिं गमनमतनोदकरोत् । इति किम् । अनेन शोभनोद्यानेन सुन्दरक्रीडावनेनाद्य इदानीं नोऽस्माकं स्मरजा कामोत्पन्ना आर्त्तिः पीड़ा न नोद्येति । अपि तु नोद्यैव नाशनीयैवेत्यर्थः ॥ कीदृशेन ॥ इनप्रभाविहीनेन इनः सूर्यस्तस्य या प्रभा किरणस्तेन विहीनेन रहितेन ॥२०॥

सोऽहितहन्तापततःकांश्चिदपश्यद्धिताय हन्ताऽऽपततः ॥ सस्नेहंतापततस्तान्यदमीतोषमावहन्ताऽऽपततः ॥ २१ ॥

सोहितेति–अहितानां शत्रूणां हन्ता नाशकः स नलः हन्त हर्षे कांश्चित्पततः पक्षिणोऽपश्यदद्राक्षीत् । कीदृशान् पततः हिताय सुखदानाय आपततः आगच्छतः। कीदृशः सः तापततः तापेन ततो व्याप्तः कामज्वरपीडित इत्यर्थः ॥ यद्यस्माद्धेतोरमी पतत्रिणो हंसास्तोषं सन्तोषमाव-

हन्त अकुर्वत ततो हेतोः सस्नेहं स्नेहपूर्वकं यथा स्यात्तथा सोयं नलस्तान् हंसानाप प्राप जग्राहेति यावत् ॥ २१ ॥

तंतरसारसमानःसविहङ्गगणोऽब्रवीत्ससा
रसमानः॥ गतहिंसारसमानस्तुदलभ्यो
निष्क्रयःस्वसारसमानः ॥ २२ ॥

तन्तरसेति—रसमानः शब्दायमानः ससारसमानः सारसैः पक्षिविशेषैः कृतो यो मानोऽभिमानस्तेन सहितः सविहङ्गगणो हंससमूहस्तरसा वेगेन तं नलमब्रवीदवदत् । तदेवाह । हे गतहिंसारस गतः हिंसाया रसः प्रीतिर्यस्य स तत्संबुद्धिः । नोस्मान्मातुद मापीडय । त्वया स्वस्य सारः सामर्थ्यादी रूपादिर्वा तत्तुल्यः निष्क्रयो लभ्यः प्राप्यः । अस्मत्त इति शेषः ॥ २२ ॥

त्वंझपकेत्वङ्गत्वादधिकोभैम्याःस्तुमोऽन्ति
केत्वङ्गत्वा ॥ सातेङ्केत्वङ्गत्वाऽसक्ता लल
तत्सकाशकेलंगत्वा ॥ २३ ॥

त्वमिति—हे अंग नल तु पुनस्त्वं झपकेत्वङ्गत्वात् झषकेतोः कामस्याङ्गं तस्य भावस्तस्मादधिको नलः कामशरीरतोप्यधिकः सुन्दर इति यावत् । इति भैम्या अन्तिके निकटे त्वा त्वां स्तुमः स्तोष्यामः । सा भैमी तेऽङ्के क्रोडे तु पुनः अङ्गतु राजतु । अगिर्गत्यर्थः । कथंभूता आसक्ता

त्वं तत्सकाशके दमयन्तीनिकटे । स्वार्थे कः । गत्वा क्रीडां कुरु ॥ २३ ॥

इतिहंसारामायानिकटंयामयकृतेवसारा
माया ॥ जग्मुःसारामायाजगदुश्चाऽऽ
लीभिरभिससारामाया ॥ २४ ॥

इतीति—हंसाः सारामाया आरामेण सह वर्त्तमाना मा तस्याः सारामायाः रामाया भैम्या निकटं समीपं जग्मुर्ययुः । च पुनः इति वक्ष्यमाणमूचुः । या मयेन दैत्यशिल्पिना कृता सारा उत्कृष्टा मायेव या आलीभिः सखीभिः अमा सह अभिससार गतिमकरोत् । "अमा सह समीपे च" इत्यमरः ॥ २४ ॥

श्रीसङ्काशाऽस्यऽस्यत्वंभैमिनलस्यशशिनि
काशास्यस्य ॥ अरिलोकाशास्यस्ययदि
भार्यास्याःकुमारिकाऽऽशास्यस्य ॥ २५ ॥

श्रीति—हेभैमि त्वं यद्यस्य नलस्य भार्या स्याः भवेस्तर्हि श्रीसंकाशाऽसि लक्ष्मीतुल्यासि । श्रीवत्संकाशते शोभत इति सा । कीदृशस्य नलस्य । शशिना निकाशं तुल्यमास्यं वदनं यस्यासौ तस्य । एवमरिलोकानां या आशा वाञ्छा तामस्यति नाशयतीति सः तस्य । एवं कुमारिकाशास्यस्य कुमारिकाभिरपरिणीताभिः स्त्रीभिराशं[illegible] वाञ्छितस्य ॥ २५ ॥

इतिहांसेनोदितयागणेनभैम्यामुदारसेनो
दितया ॥ न बभासे नोदितया स्मरेण स
पुनर्नलौकसेनोदितया ॥ २६ ॥

इतीति—इत्युक्तक्रमेण हांसेन गणेन हंससार्थेन उदितयोक्तया मुदा आनन्देन हेतुना रसे शृङ्गारे नोदितया प्रेरितया स्मरेण कामेन उदितया उदयं प्राप्तया युवत्येति यावत् । एतादृश्या भैम्या न बभासे इति न । अपि तु बभासे । पुनस्तया भैम्या स हंसगणो नलौकसे नलगृहाय अनोदि प्रेषितः ॥ २६ ॥

ताबहुधावायस्य्ःश्रेण्यःपुनरस्यसन्निधा
वायस्य॥तांचनिधावायस्य्न्यनुवंस्तुल
नायनविबुधावायस्य ॥ २७ ॥

ताइति—च पुनस्ता वायस्यः हंसश्रेण्यः वयसां पक्षिणामिमाः वायस्यो हंसपङ्क्त्योऽस्य नलस्य संनिधौ समीपे आयस्यागत्य तां भैमीं बहुधा नानाप्रकारेण व्यनुवन् अस्तुवन् तुष्टुवुरिति यावत् । किंभूते संनिधौ । आयस्य धनानिधौ आकरे आश्रये वा।अस्य कस्य यस्य तुलनाअपि देवा अपि न भवन्ति।वाशब्दोऽथार्थकः २७

[illegible]विसविनामानितयाजह्रेभैम्यानलोऽपि
[illegible]ऽनितया ॥ स्वास्थ्यंनामानितया

शिश्येचविचिन्त्यतस्यनाऽमानितया॥२

इतीति—इत्यनेन प्रकारेण विना हंसेन मानितया तया कृतस्तुत्येति यावत् । नाम सम्भावनायाम् । सुखमानितयाऽप्राप्तया तया भैम्या धीरोपि नलः जह्ने हृतः वशीकृत इतियावत् ॥ च पुनस्तस्य नलस्य विचिन्त्य नलनैषधेत्यादि चिन्तयित्वा शिश्ये सुप्तम् । कीदृक् नलः अमानितया न उपलक्षितः मानिनो भावो मानिता तस्या अभावोऽमानिता तया न उपलक्षितः अभिमानयुक्त इति भावः ॥ २८ ॥

युग्मम्—अथससमुद्रागस्यक्ष्मान्तस्याऽलङ्कृतेःसमुद्रागस्य ॥ यौवनमुद्रागस्यस्वसुतारत्नस्य सादमुद्रागस्य ॥ २९ ॥ दृष्ट्वा राजातनुतस्वयंवरं विधिवदिन्दिराजातनुतः ॥ यस्यजराजातनुतःपृथग्व्यथाऽसौ जनाद्रराजाऽतनुतः ॥ ३० ॥

अथेति—दृष्ट्वेति—अथानन्तरं समुद्रश्च अगश्च समुद्रागौ ताभ्यां सहितस्य क्ष्मान्तस्य पृथ्वीपर्य्यंतस्यालङ्कृतेरलङ्कारभूतस्य समुद्रागस्य मुदमानन्दं राति ददातीति मुद्रः मुद्रश्चासावगश्च स तेन सह वर्त्तते इति तादृशस्य।यद्वा राजा कीदृशः समुत्सहर्षःद्रागझटिति अस्य सुतारत्नस्येत्यर्थः। यद्वा

मुच्च रागोऽनुरागः स च मुद्रागौ ताभ्यां सहितस्य। एवं यौवनमुद्रा स्तनोद्रेकादिचिह्नं तद्रस्य प्राप्तस्य। एवम् उद्रागस्य उत्उद्गतो रागोऽनङ्गरागः पीडा वा यस्य तस्य।"रागो मत्सरे लोहितादिषु। क्लेशादावनुरागे च गान्धारादौ"इति मेदिनी॥ स्वसुतारत्नस्य सादम् अवसादं कामजदुःखं दृष्ट्वेति द्वितीयेनाऽन्वयः। असौ राजा भीमः स्वयंवरं विधिवदनुताकरोत्। यो राजा अतनुतः महतो जनात् मनुष्यात् रराज शुशुभे। यस्य तनुतो देहात् जराजा जरोत्पन्ना व्यथा पृथक् भिन्ना बहुमध्ये सुन्दरो युवा चेति भावः। कीदृशो राजा इन्दिराजातनुतः इन्दिरा लक्ष्मीस्तस्याः सकाशाज्जातो यः कामस्तेन नुतः स्तुतः कामाधिकसुन्दर इति यावत् ॥२९॥ ३०॥

तंहासेनाऽऽपाऽऽलिःस्वयंवरंक्षितिभुजांस
सेनापालिः॥ नवमासेनापालिःस्त्रगेषुयैः
शिरसियारसेनापालि॥ ३१॥

तमिति–क्षितिभुजां राज्ञाम् आलिः पङ्क्तिर्हासेन हर्षादिना तं दमयन्त्याः स्वयंवरमाप प्राप। यद्वा कीदृशी आलिः ससेनापालिः सेनापालयः सेनान्यस्तद्युक्ता सा। स्रक् माला एषु राजसु न बभासे इति काकुः। अपि तु शुशुभे इत्यर्थः। सा का या स्रक् माला तैः राजभिः शिरसि रसेन स्नेहेन अपालि अरक्षि धृतेत्यर्थः। किंभूता स्रक् नापालिः अपगता

अलयो यस्याः सा अपालिः न अपालिः नापालिः सभ्रमरे त्यर्थः। तेषां शिरःसु इन्द्रनीलादिमणिमत्तया भृङ्गाभावेपि भृङ्गवत्तया माला शोभते स्मेति ध्वनिः॥ ३१॥

तांगांसेनाराजिःस्वर्गसदांयैःसदारसेनाऽ
राजि ॥ आयासेनाऽऽराऽऽजिक्षयित
रिपौचलतिविबुधसेनाराजि ॥ ३२ ॥

तामिति–आजिक्षयितरिपौ आजौ संग्रामे क्षयिता नाशिता रिपवः शत्रवो येन सः तस्मिन्। विबुधसेनाराजि विबुधा देवास्तेषां या सेना तस्या राट् सः तस्मिन्निन्द्रे चलति सति । स्वर्गसदां देवानां सेनाराजिः सेनापङ्क्तिरायासेन श्रमेण तां गां विदर्भदेशोपलक्षितां भुवम् आर प्राप । यैः स्वर्गसद्भिः सदा सर्वदा रसेन रागेण भैम्यनुरागेण अराजि शोभितम् ॥ ३२॥

सोऽथपरमहस्तेनप्रापिनलेनोत्सवःपरम-
हस्तेनः॥ स्फुरितपरमहस्तेनप्रबभौरवि
णेवतत्पुरंपरमहस्तेन ॥ ३३ ॥

सोथेति–अथाऽनन्तरं परमहस्तेन परम उत्कृष्टो हस्तः करो यस्य सः तेन आजानुलम्बितभुजेनेत्यर्थः। स स्वयंवरः प्रापि प्राप्तः। कथंभूतः स्वयंवरः परमहस्तेनः परेषां महाः परमहास्तेषां स्तेनस्तस्करः। महउत्सवः। परमुत्कृष्टं तत्पुरं भीमनगरं तेन नलेन प्रबभौ शुशुभे। केन किमिव।

स्फुरितपरमहस्तेन । स्फुरिताः परमा उत्कृष्टा हस्ताः किरणाः यस्य तेन रविणा अहः दिनमिव ॥ ३३ ॥

क्षिप्तलसन्नालीकानऽहितेषुमुखेन्दुतुलितस-
न्नालीकान् ॥ राज्ञःसन्नालीकान्कान्तिर्विबु-
धांश्चनाहसन्नालीकान् ॥ ३४ ॥

क्षिप्तेति--नाली नलस्येयं नाली कान्तिः कान् राज्ञो नृपान् च पुनः कान् विबुधान्नाऽहसदपि तु सर्वानेव । कीदृशान् अहितेषु शत्रुषु क्षिप्तलसन्नालीकान् क्षिप्ताः प्रेरिताः लसन्तो दीप्यमाना नालीका बाणविशेषा यैस्तान् । एवं मुखेन्दुतुलितसन्नालीकान्मुखेन्दुभिस्तुलितानि सन्ति समीचीनानि नालीकानि पद्मानि यैस्तान् । एवं सन्नालीकान् सन्नमपगतमलीकं कपटादि येषां ते तान् । पद्ल विशरणगत्यवसादनेपूक्तः ॥ ३४ ॥

अजनिजलापास्यन्तंस्वयशोऽनिजकंमहः
कलाऽपास्यन्तम् ॥ शत्रुकलापास्यन्तंप्रे-
क्ष्यनलंसुरततिःकलापास्यन्तम् ॥ ३५ ॥

अजनीति--सुरततिर्देवपङ्क्तिस्तं नलं प्रेक्ष्य दृष्ट्वा जला जडा किंकर्त्तव्यतामूढा जातेत्यर्थः । डलयोरभेदात् । कीदृशं नलम् । स्वीयं यशः पास्यन्तं रक्षन्तम् । अनिजकमस्वकीयं महस्तेजः प्रभुत्वमपास्यन्तमरक्षन्तम्।यद्वा निजकं स्वकीयं महस्तेजः अपास्यन्तं दूरतोऽपसारयन्तमित्यर्थः॥

एवं शत्रुकलापाऽस्यन्तं शत्रूणां कलापाः समूहास्तानस्यति क्षिपतीति सः तम्।अथवा अस्यन्तः असिना अन्तो एतादृशः शत्रुकलापो यस्य। एवं कलापास्यं कलां ति कलापश्चन्द्रस्तत्सदृशमुखम् । "कलापो भूषणे बर्हे णीरे संहतेऽपि च" इत्यमरः ॥ ३५ ॥

स्वर्निलयानामनलङ्कृतमपिजेतुंततिःश्रियानामनलम् ॥ यमजेयानामनलंप्रोचे शक्रस्तमरिचयानाऽऽमनलम् ॥ ३६ ॥

स्वरिति—शक्र इन्द्रः तं नलं प्रोचे उवाच।नाम सम्भावनायाम् । तं कं यमनलङ्कृतमप्यलङ्काररहितमपि नलं स्वर्निलयानां देवानां ततिः श्रेणिः श्रिया शोभया जेतुं तिरस्कर्तुमनलं न अलं समर्था । किंभूतं नलम् अजेयानामन्यैर्जेतुमशक्यानामरिचयानां शत्रुयूथानामनलमग्निं दाहकत्वात् ॥ ३६ ॥

वदकामायासन्नस्त्वंभैम्यैयद्गुणाःश्रमायाऽऽसन्नः ॥ श्रेष्ठतमायाऽऽसन्नस्त्वन्दुष्टानतुजनःस्वमायासन्नः ॥ ३७ ॥

वदेति— हेनल त्वं तस्यै भैम्यै नोऽस्माकं कामायासं कामेन कृतो य आयासस्तं वद त्वत्कृते देवान्कामः पीडयतीति भावः।तस्यै कस्यै यद्गुणाः यस्याः गुणाः नोऽस्माकं श्रमाय खेदाय आसन् अभूवन्। शमायेति पाठे शान्त्यै

इत्यर्थः । अथ च या श्रेष्ठतमा अत्यन्तमुत्कृष्टा तु पुनस्तत्रेत्यार्थात् आसन्नो जनो द्वारपालकादिस्त्वां न द्रष्टा न द्रक्ष्यति । कीदृशस्त्वम् । स्वमायासन्नः स्वस्य तव मत्प्रसादजन्या या माया कपटः तयासन्न आच्छन्नः ॥ ३७ ॥

इतिसरवेकेहास्तंन्यस्यसमुकुलंसुरप्रवेके
ऽऽहास्त ॥ तामविवेकेहास्तःश्रयतिस्त्री
तत्रपार्थिवेकेऽहास्त ॥ ३८ ॥

इतीति—सुरप्रवेके सुरश्रेष्ठे इन्द्रे इति उक्तप्रकारेण सरवे सशब्दे सति इन्द्रे एवमुक्तवति सतीत्यर्थः । के मस्तके हास्तं हस्तसम्बन्धिमुकुलं न्यस्य मस्तकेऽञ्जलिं कृत्वा स नलः तां दमयन्तीम् अहास्त जगाम।कीदृशः सः अविवेकेहास्तः अविवेकस्याऽज्ञानविशेषस्य या ईहा चेष्टा तया अस्तः रहितः।यद्वा नलं दृष्टवती दमयन्ती नाऽन्यं वरिष्यतीति इन्द्रस्य योऽविवेकस्तज्जनितया चेष्टया अस्तः प्रेषितः इत्यर्थः । पार्थिवे नले श्रयति गतवति सति का स्त्री इह स्थले आस्त अतिष्ठत् न कापीत्यर्थः ॥ ३८ ॥

हरिपवमानयमानान्दूतोऽस्मिनलोमहार
मानयमानान् ॥ भवतींमानयमानान्भै
मिसुरान्विद्धिमहमिमानयमानान् ॥३९॥

हरीति—हरिरिन्द्रोऽग्निश्च पवमानो वरुणो वायुश्च यमः

कृतान्तस्तेषां दूतो नलनामाहमस्मि । इमानिन्द्रादीन् सुरान् महं तव स्वयंवरमयमानान्प्राप्तान् विद्धि जानीहि। कीदृशान् महारमानयमानान् रमा लक्ष्मीः नयो नीतिः मानश्चित्तसमुन्नतिः महान्तो रमानयमाना येषां ते तान् । एवं भवतीं त्वां मानयमानान् स्वीकुर्वतः॥ ३९ ॥

तुल्येप्सरसादेहिप्रभवोमग्नाःस्मरप्रसरसादेहि ॥ तानभिसरसादेहिस्रजश्चनाकात्सुखंचसरसादेहि ॥ ४० ॥

तुल्यइति—हेअप्सरसा तुल्ये रम्भादिसदृशे, देहिप्रभवो मनुष्यादीनामीश्वरा देवाः स्मरप्रसरसादे स्मरस्य यः प्रसरः प्रसारस्तज्जन्ये सादे दुःखे मग्नाः । हि यतः अतः सा त्वं तान्देवानभिसर स्वीकुरु। च पुनः स्रजं मालां देहि सरसादमृतादियुक्तान्नाकात्स्वर्गात्सुखमेहि प्राप्नुहि ॥ ४० ॥

इतिकृतसामारवतःसुरलोकात्तन्मुखेनसामारवतः॥ नरिरंसाऽऽमारवतस्थलादिवनलोत्कमानसामारवतः ॥ ४१ ॥

इतीति—सा भैमी सुरलोकादिन्द्रादिदेवगणात् रिरंसां रन्तुमिच्छां क्रीडां न आर न प्राप। किंभूतात्तन्मुखेन नलमुखेन इति पूर्वोक्तन्यायेन कृतसामारवतः कृतः सामस्य सान्त्वनायाः आरवश्शब्दो येन ततः। एवं मारवतः मारो मदनस्तद्वतः। बत खेदे । कीदृशी सा नलोत्कमानसा नले

उत्कमुत्कंठितं मानसं चेतो यस्याः सा।कस्मादिव मारवतः स्थलादिव मरोरिदं मारवं तादृशात् स्थलादिव मरुसम्बन्धिदेशादिव । यथा हंसः नलोत्कमानसः नले जलोत्पन्नपदार्थे विसे उत्कण्ठितचित्तो मरुसम्भूतवस्तुतो रिरंसां नाप्नोति। यद्वा कृतसामेति दमयन्त्या विशेषणम्। कृतं साम सान्त्वनं यया सा आरवतः । शब्दं कुर्वत इति सुरलोकविशेषणम् ॥ ४१ ॥

साविरराजाऽऽयतयावीक्ष्यदृशातंस्मरातुरा जायतया ॥ स्थितिरत्राऽजायतयाद्युसदां चाऽभापिनिषधराजायतया ॥ ४२ ॥

सेति—सा भैमी विरराज विशेषेण शुशुभे । सा का या आयतया विशालया दृशा दृष्ट्या अत्र भवने तं नलं वीक्ष्य दृष्ट्वा स्मरातुरा कामव्याप्ताऽजायत अभूत्। च अपरं तया भैम्या निषधराजाय नलाय द्युसदां दिवि सीदन्तीति द्युसदो देवास्तेषां स्थितिः स्थानम् अजायतया जायायाः भावो जायता न जायताऽजायता तयाऽभापि अवादि । स्त्रीत्वेन देवान्न वृतवतीति भावः ॥ ४२ ॥

तस्यादेवाद्यस्यप्रणम्यचनलेनधीःपदेऽवाद्य स्य ॥ सतिनिनदेवाद्यस्यस्वयंप्रियायाःपदं मुदेवाद्यस्य ॥ ४३ ॥

तस्याइति—नलेनास्य देवाद्यस्य सुरमुख्यस्येन्द्रस्य पदे

चरणे प्रणम्याऽभिवाद्य तस्याः भैम्याः धीः बुद्धिरवादि उक्ता। कस्मिन्सति वाद्यस्य तूर्यादेर्निनदे शब्दे सति। यस्य नलस्य मुदे आनन्दाय प्रियायाः पदं वाक्यम् अवात्प्राप यद्वा अस्य कस्य यस्येन्द्रस्य मुदे हर्षाय प्रियायाः पदं स्थानमवाज्जगाम। नल इति शेषः। भैमी त्वां न वृणुत इत्युक्तवानिति भावः॥ ४३ ॥

अथतरसारङ्गेऽयंनृपतिगणोऽस्थितपदेषुसारङ्गेयम् ॥ चञ्चलसारङ्गेऽयंदमयन्तीचाऽक्षितुलितसारंगेयम् ॥ ४४ ॥

अथेति—अथाऽनन्तरमयं नृपतिगणो राजलोको रङ्गे स्वयम्वरसभायां तरसा वेगेन पदेषु भीमकल्पितमञ्चस्थानेषु अस्थित आसीत् नृपतिगणः। पदान्यकृत इतिपाठे पदानि चरणविन्यासान् अकृत अकरोदित्यर्थः। किं कुर्वन् सारमुत्कृष्टं गेयम् अयन् गीतं शृण्वन्नितिभावः। गत्यर्थो ज्ञानार्थः। कीदृशे रङ्गे चञ्चलसारङ्गे सौरभ्याधिक्येन चञ्चलाः सारङ्गा भ्रमरा यत्र तादृशे। यद्वा चञ्चलसारङ्गे खेलत्पक्षिविशेषे इत्यर्थः। यद्वा चञ्चला गमनागमनशीलाः सारङ्गा गजा यस्मिन् तस्मिन्नित्यर्थः। च पुनरियं दमयन्ती स्वोचितपदेषु अस्थित इति पूर्वेणान्वयः। कीदृशीयम् अक्षितुलितसारङ्गा अक्षिभ्यां तुलितः सारङ्गो मृगो यया सा। "सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे" इति विश्वः॥४४॥

युग्मम्—व्यधुरवनोमान्येषुप्रजानृपेष्वथ
निवेद्यनामान्येषु ॥ सूतैर्नामान्येषुप्रकी
र्त्यमानेषुशोभनामान्येषु ॥ ४५ ॥
साङ्गेननलसमानाननलसमानानऽमुत्रक
तिचित्पुरुषान् ॥ प्रैक्षतननलसमानान्
नलसमानानभून्नतेषांभेदः ॥ ४६ ॥

व्यधुरिति। सांगइति। अथ एषु नृपेषु राजसु नामानि निवेद्य उक्त्वा सूतैर्मागधैः प्रकीर्त्यमानेषु स्तूयमानेषु वन्दिभिः कृतपरिचयेषु सत्सु तया। नाम सम्भावनायाम्। अन्येषु मान्येषु देवेषु प्रकीर्त्यमानेषु सत्सु। एषु केषु येषु नृपेषु प्रजास्तत्रत्या जना अवनामान्नमस्कारान् व्यधुश्चक्रुः। सा शोभना भव्या भैमी अमुत्र स्वयंवरे कतिचित्पुरुषान् न प्रैक्षत इति न किन्तु ददर्श। कीदृशान् अनलसमानानग्नितुल्यान् एवं लसमानान् देदीप्यमानान्। एवम् अनलसमानान् न नलसमाना अनलसमानास्तान्। अङ्गेन शरीरेण नलसमानान् नलेन सदृशान् यतस्तेषां नलसमानां पुरुषाणामिन्द्रादीनां भेदो विविच्य ज्ञानं नाऽभून्न जातम् ॥ ४५ ॥ ४६ ॥

रुचिकृतनासत्यागाम्स्फुरतुनलोयादिच
वच्मिनाऽसत्यागाः ॥ अपिदीनासत्या
ऽगांन्याययुतेनैववर्त्मनासत्यागा ॥४७॥

रुचीति—च पुनः यद्यहं सती साध्वी यद्यहम् असत्याः गा वाणीः न वच्मि न वदामि। तथा दीनापि यदि न्याययुतेनैव वर्त्मना धर्म्ममार्गेणैव आगां गच्छामि। यद्यहं सत्यागा त्यागेन दानेन सह वर्त्तमाना तदा नलः स्फुरतु इन्द्रादिभिन्नत्वेन ज्ञानविषयो भवतु । कीदृशो नलः रुचिकृतनासत्यागाः रुच्या कान्त्या कृतः नासत्ययोर्दस्रयोः आगोऽपराधो येन दस्राधिकसुन्दर इति यावत् ॥ ४७ ॥

यदिवाभावंन्यस्यस्थिताऽस्मिनलएवनर
विभाऽवन्यस्य ॥ देवसभावन्यस्यद्विप
स्यवपुषोभवेद्विभाऽवन्यस्य ॥ ४८ ॥

यदिवेति—वा समुच्चये यदि चेत् अन्यस्याऽन्यस्मिन् पुरुषे भावं चित्ताभिप्रायं न्यस्य त्यक्त्वा। निपूर्वस्यासुक्षेपण इत्यस्य न्यस्येति रूपम्। अलं नल एव स्थितास्मि तिष्ठामि वर्त्ते तर्हि अस्य नलस्य वपुपः शरीरस्य विभा कान्तिः अवनी रक्षिका भवेद्भवतु। कीदृशे नले नरविभौ नराणां विभुर्नरविभुस्तस्मिन् । कीदृशस्य वपुषः देवसभावन्यस्य द्विपस्य देवानां सभैव वनं तत्रोत्पन्नस्य द्विपस्य हस्तिनः अन्योपि द्विपो वन्यो भवति ॥ ४८ ॥

कृतभावासाऽवनितानितिभुवमैक्षत्सुरान्
सुवासावनिता ॥ स्वपतिंवासावनिता
चिह्नंधार्मिकजनेध्रुवाऽऽसाऽवनिता ॥ ४९ ॥

कृतेति—असौ वनिता भैमी भुवं भूमिमनितान् अप्राप्तान् भूमिस्पर्शरहितान् सुरान् देवानैक्षदैक्षताऽपश्यत्। कथंभूता सा इत्यनेन प्रकारेण कृतभावा कृतो भावश्चित्ताभिप्रायो यया सा। एवं सुवासाः सुष्ठु शोभनं वासो वस्त्रं यस्याः सा। वाशब्दश्चार्थः। च पुनः स्वपतिं नलम् ऐक्षत्। कीदृशं स्वपतिम्। अवन्या सह वर्त्तमानः सावनिः तस्य भावः सावनिता सैव चिह्नं यस्य तं भूमियुक्तपादत्वात् देवभिन्नत्वेन अपश्यदित्यर्थः। देवानां तु तद्राहित्यं स्वाभाविकम्। तं कं यस्य नलस्य अवनिता अवनं रक्षणमस्यास्तीत्यवनी अवनिनो भावोऽवनिता रक्षणवत्ता धार्म्मिकजने साधुनि जने ध्रुवा निश्चिता आस भवतिस्म। आसेति बभूवार्थेऽव्ययम्॥४९॥

स्वैरिरंसादेवाऽल्याकुलयादृष्ट्याऽर्थितापि
सादेवाल्या॥ वपुषि ससादेवाल्याऽदवृत्त
नलमुपस्थितंरसादेवाऽऽल्या॥५०॥

स्वेति—सा भैमी आल्या सख्या। करणेन। रसादेव प्रीतेरेव तं नलमवृत अवृणुत। कीदृशं नलम् उपस्थितम् तिष्ठन्तम्। कस्मिन्सति बाल्याद्बाल्यमारभ्य बाला नवयौवना तस्या भावो बाल्यं तस्माद्बाल्याद्धेतोर्वा वपुषि ससादे सति सखेदे सति। कीदृशी सा देवाल्या देवपङ्क्त्या अर्थितापि याचितापि एवं दृष्ट्या दृशा स्वैरिरंसादा इव स्वस्य रिरंसा रन्तुमिच्छा तां ददातीति स्वक्रीडाप्रदा इव। कीदृशा दृष्ट्या अल्याकुलया भ्रमर इव चञ्चलया॥५०॥

सत्सदसोमाननयारुद्रसमोयःस्वतेजसो
माननया ॥ प्रवृतःसोमाननयानलोबभौ
भुविगुणेनसोमाननया ॥ ५१ ॥

सदिति—स नलो बभौ शुशुभे। कीदृशः अनया सोमाननया चन्द्रवदनया भैम्या प्रवृतः पतित्वेन स्वीकृतः । सः कः यः सत्सदसः सतां देवानां साधूनां वा यत्सदः सभा तस्याः या मानना तया रुद्रसमः शिवसदृशः रुद्रांशत्वात् । अनया कया स्वतेजसा पातिव्रत्येन उमा नेति न किन्तूमैव एतेन शिवपार्वतीयोगोपि वर्णितः । कीदृशो नलः गुणेन शौर्य्यादिना भुवि पृथिव्याम् अमान् न मातीत्यमान् अधिकगुण इत्यर्थः ॥ ५१ ॥

मदद्म्भाऽवरमस्यज्ज्ञात्वाऽथमनोगुरुप्र
भावरमस्य॥ सुरवृषभावरमस्यप्रदिश्य
जग्मुर्गतप्रभावरमस्य ॥ ५२ ॥

मदेति—अथ सुरवृषभा देवश्रेष्ठा इन्द्रादयोऽस्य नलस्य वरं प्रदिश्य दत्वा जग्मुर्ययुः। वरदाने हेतुमाह।अस्य नलस्य मनश्चित्तं मदद्म्भौ मदश्च दम्भश्च तौ अरं झटिति अस्यत् त्यजत् ज्ञात्वा। कीदृशस्याऽस्य गुरुप्रभावरमस्य प्रभावश्च रमा च प्रभावरमे गुर्व्यौ प्रभावरमे यस्य तस्य। यद्वा गुर्वी प्रभावेन रमा लक्ष्मीर्यस्य।एवं गतप्रभावरमस्य गतो नष्टः

प्रभायाः कान्तेरवरमोऽशोभनत्वं यस्मात्सः तस्यातिशयितकान्तेरित्यर्थः ॥ ५२ ॥

गुरुमहिमापरमायास्तम्भीनलएपवस-
तिऽऽमापरमायाः ॥ प्रिययाऽमापरमायाः
स्वपुरमगुर्यत्रतंक्षमापरमाऽऽयाः ॥ ५३ ॥

गुर्विति—एष नलः प्रियया भैम्या अमा सह तत्स्वं पुरं स्वनगरमाप प्राप । "स्यादमा सन्निधानार्थे सहार्थे" इति हेमचन्द्रः ॥ कीदृशः गुरुमहिमा महतोभावो महिमा गुरुः महिमा यस्य सः । एवं परमायास्तम्भी परेषां शत्रूणां या माया तस्याः स्तम्भी रिपुकपटनाशक इत्यर्थः । कीदृशं स्वपुरं परमाया उत्कृष्टायाः रमायाः लक्ष्म्याः वसतिं स्थानम् । तत्किम् यत्र पुरे आयाः धनागमनानि क्षमापरं सहिष्णुताशीलं तं नलमगुः प्रापुः ॥ ५३ ॥

शशिनासमहासमहानगरेजनतासमहास
महास्तमुदम् ॥ अतिभासुरयासुरया
व्यहरद्व्यतनोत्सुरयासुरयागमपि ॥ ५४ ॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
प्रथमोच्छ्वासः ॥ १ ॥

शशिनेति–जनता जनसमूहः नगरे नलपुरे मुदं हर्षं समहास्त प्राप। ओहाङ्गताविल्यस्य धातोः प्रयोगः।ये गत्यर्थास्ते प्राप्त्यर्था ज्ञानार्थाश्च। किंभूता जनता शशिना चन्द्रेण

समहासमहा समं हासस्य महस्तेजो यस्याः सा।
वतेजसोः"इत्यमरः। एवं समहा महेन उत्सवेन
सा। एवं सुरया शोभनो रयः शब्दो यस्याः सा सुरया।
जनतैव सुरया मदिरया व्यहरच्चिक्रीड सुरयागमपि
नमपि व्यतनोदकरोत् । कीदृश्या सुरया भासुरया
च्छया ॥ ५४ ॥

इति श्रीनलोदयटीकायां सुबोधिन्यां प्रथमोच्छ्वासः ॥ १ ॥

## द्वितीयोच्छ्वासः ।

अथरतिरेकान्तेनप्रापिनलेनाऽत्रमन्दिरे
कान्तेन ॥ तांपुनरेकान्तेनप्राप्तवतारिपु
मदातिरेकान्तेन ॥ १ ॥

अथेति—अथाऽनन्तरं कान्तेन कमनीयेन। एवं तां भैमीं पुनरेकां महीं च प्राप्तवता। यद्वा एकां मुख्यां तां भैमीमेव प्राप्तवता। एवं रिपुमदाऽतिरेकान्तेन रिपूणां शत्रूणां मदो गर्वस्तस्याऽतिरेक आधिक्यं तस्यान्तेन नाशकेन तेन नलेन एकान्तेनाऽतिशयेनाऽत्र मन्दिरे रतिः क्रीडा प्रापि प्राप्ता। यद्वा एकान्तेऽत्र मन्दिरे रतिः न प्रापीति न किन्तु प्राप्तैव-काक्वर्थं नञ् ॥ १ ॥

बभौससारसागरश्चकाससारसार्द्रधीः ॥
मधुःससारसारवस्तदाससारसात्तवः ॥ २ ॥

बभाविति—सारस्य बलस्य सागरः समुद्रः स नलो बभौ शुशुभे। "सारो बले स्थिरांशे च" इत्यमरः। एवं रसार्द्रधीः रसेन प्रेम्णा आर्द्रा रसकोमला धीर्बुद्धिर्यस्याः सा दमयन्ती चकास शुशुभे। तदा तस्मिन्नवसरे मधुर्वसन्तः ससार आजगाम। "मधुश्चैत्रर्त्तुदैत्येषु" इति हेमचन्द्रः। कीदृशो मधुः ससारसारवः सारसानामारवः शब्दस्तेन सहितः। पुनः कीदृक्। सार्त्तवः। ऋतौ भवमार्त्तवं पुष्पादि तत्सहितः। सृ गताविवत्यस्य लिटि ससारेति ॥ २ ॥

समुदधिताऽऽशालीनां करेण कणिशाग्ररुचि
जिताशालीनाम्॥ दिनभर्त्ताशालीनामिव
नलिनीऽमथसमुत्थिताऽऽशाऽलीनाम्॥ ३ ॥

समुदधीति—दिनभर्ता सूर्यः करेण किरणेन नलिनीं समुदधित समुत्थापितवान्। विकाशयामासेति यावत्। अथाऽनन्तरमलीनां भ्रमराणामाशा इच्छा समुत्थिता उदिता। कीदृशेन करेण शालीनां धान्यानां कणिशाग्ररुचिजिता कणिशाग्रस्य या रुक् तां जयतीति तत्तेन व्रीहिमञ्जर्यग्रकान्तिजिता "कणिशं शस्यमञ्जरी" इत्यमरः। कीदृशीं नलिनीम् आशालीनां चन्द्रकरस्पर्शात् आशासु दिक्षु लीनाम् अदर्शनगताम्। कामिव शालीनामिव लज्जितामिव। अन्यापि परपुरुषकराऽऽकृष्टा लज्जिता भवति। परपुरुषभुक्तापि स्वामिना न त्यक्ता करेणोद्धृता तत्र पिङ्गाना-

माञ्ञा भवतीति भावः । "अलिः षिङ्गे च षट्पदे" इति रन्तिः ॥ ३ ॥

कुरवापचसारसकाकुरवान्कुरवाख्यनगोपि
तदाकुरवान् ॥ कमलङ्कृतवद्गतपङ्कमलं
कमलंनविलोभयितुंकमलम् ॥ ४ ॥

कुरवापेति—तदा वसन्तकाले कुः पृथिवी सारसकाकुरवान् सारसानां काकवो मनोहरा ये रवाः शब्दास्तानवाप प्राप।कुरवाख्यनगोपि कुरवकवृक्षोप्यङ्कुरवान्जात इतिशेषः। कमलं पद्मकं जलं अलंकृतवत् शोभयत् । एवं कं पुरुषं विलोभयितुं न अलम् अपि तु सर्वानेव रञ्जयितुं समर्थम्। कीदृशंकं गतपङ्कमलं गतः पङ्करूपो मलो यस्य तत्। कर्दम रहितमित्यर्थः ॥ ४ ॥

अगुरतिमहिमानीतस्ततोरविमहांसिगुरु
तमहिमानीतः ॥ भवनंमहिमानीतःस्म
रेणपरितश्शराख्यमहिमानीतः ॥ ५ ॥

अगुरतीति— रविमहांसि सूर्य्यतेजांसि गुरुतमहिमानीतः अतिशयेन गुरुर्गुरुतमा गुरुतमा चासौ हिमानी च सा तथा ततः पञ्चम्यास्तसिः।इतस्ततः अगुः
नि रविमहांसि अतिमहिमानि अत्यन्तं महिमा येषां महाप्रभावाणि।मानी अभिमानी स नलः माहि मह ७.

युक्तं भवनं प्रासादमितः प्राप्तः। कीदृशो मानी परितः समन्तात् स्मरेण कामेन शराख्यमहिं सर्पमानीतः प्रापितः सर्पसदृशस्वबाणगोचरीकृत इत्यर्थः। कामपीडया रविरश्मिप्रतापेन च बहिः स्थातुमशक्नुवन् गृहं गत इति भावः ॥ ५ ॥

स्मरसूचितयाजगतःक्षितिसूचितयाऽभवद्धि चम्पकमुकुलम्॥ तदसूचितयाव्यथया निरसूचितयायया वियुग्दम्पतिकौ ॥ ६ ॥

स्मरेति—हि निश्चये तच्चम्पकमुकुलं चम्पककुड्मलं स्मरसूचितया अनङ्गसूचेर्भावत्वेनाऽभवत् जातम्। तत्किम्। यन्मुकुलं जगतः क्षितिसूचितया जगतः संसारस्य क्षितौ प्रहारे सुतरामुचितया योग्यतया तया तज्जन्यया व्यथया असूचि ज्ञापितम्। तया कया यया चितया वृद्धिं प्राप्तया व्यथया वियुग्दम्पतिकौ विरहितस्त्रीपुरुषौ निरसू गतप्राणौ कृतौ। स्वार्थेकः ॥ ६ ॥

विरलोच्चपलाशस्यप्रचुरंपुष्पंबभूवचपलाशस्य ॥ स्मरनीचपलाशस्यप्राश्याध्वगपिशितचारुचपलाशस्य ॥ ७ ॥

विरलइति—च पुनः विरलोच्चपलाशस्य विरलानि अप्रचुराणि उच्चानि पलाशानि पत्राणि यस्य। "पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्" इत्यमरः। तस्य पला-

शस्य ब्रह्मवृक्षस्य प्रचुरं पुष्पं बभूव जातम् ।
पुष्पम् चपलाशस्य चपला आशा तृष्णा यस्य तस्य
स्मरनीचपलाशस्य स्मर एव नीचस्तुच्छः पलाशो
राक्षसस्तस्य । प्राश्याध्वगपिशितचारु प्राश्यं ...
यत् अध्वगस्य पथिकस्य पिशितं मांसं तद्वच्चारु मनोहरम्
पथिकप्राणहारकत्वेन स्मरस्य राक्षसतुल्यत्वम् ॥ ७ ॥

ऋतौबभुर्निशाह्वयाविभाविभाविभाविभाः ॥
कलाश्चतेषुसत्पतेरदारदारदारदाः ॥ ८ ॥

ऋताविति–विभाविभाविभौ विभावो रत्यादिकारणं
विद्यते यस्याः सा विभाविनी भा कान्तिस्तया विभौ व्यापके ऋतौ वसन्ते निशाह्वया इभाः निशैवाऽऽह्वा नाम
येषां ते इभा हस्तिनः । मदजनकत्वात् रात्रिरूपा हस्तिन
इति रूपकम् । बभुः शुशुभिरे । च पुनस्तेषु रात्रिलक्षणगजेषु सत्पतेश्चन्द्रस्य कलाः रदा दन्ताःबभुः । कीदृशा रदाः
अदारदारदाः अदाराः जायारहितास्तेषां दारदाः दारं हृदयविदारणं ददतीति ते । यद्वा । किंभूते ऋतौ विभौ विशेषेण
शोभमाने । किंभूता इभाः विभाः विशेषेण शोभमानाः ।
किंभूता रदाः विभाः विशेषेण शोभमानाः ॥ ८ ॥

इहललनाशोकालिप्रदेनयेनाऽऽत्ममहविना
शोऽकालि ॥ कामेनाऽशोकालिस्वनहूंकृति
भिःसदिक्ष्वनाशोऽकालि ॥ ९ ॥

इहेति–इह वसन्ते ललनाशोकालिप्रदेन येन ललना स्त्री तस्याः शोकस्यालयः पङ्क्तयस्ताः प्रददाति कामिनीविरहं विस्तारयता येन पुरुषेणाऽऽत्ममहविनाशः आत्मनो यो महः कामोत्सवस्तस्य विनाशः अकालि अकारि । स पुरुषः दिक्षु दिशासु अशोकालिस्वनहूंकृतिभिरशोकवृक्षसम्बन्धिनो ये अलयो भ्रमरास्तेषां स्वनाः शब्दास्त एव हूंकृतयस्तर्जनावाचस्ताभिः करणेन कामेन अनाशः आशा वाञ्छा तया रहितोपि अकालि अबन्धि-जितेन्द्रियोपि वसन्ते भ्रमरशब्दादिना बद्धो भवतीति भावः । अथ वा न विद्यते नाशो यस्य स मृत्युञ्जयतुल्योपि कामेन अबन्धि इत्यर्थः ॥ ९ ॥

स्मरस्ययुद्धरङ्गतांरसाऽऽरसारसारसा ॥
जिताविर्योगिनः समुन्नतेनतेनतेनते ॥१०॥

स्मरस्येति–सारसारसा साराः श्रेष्ठाः सारसाः पक्षिणो यस्यां सा रसा पृथ्वी स्मरस्य युद्धरङ्गतां समरभूमिभावम् आर प्राप । समुन्नतेनतेन सम्यक् प्रकारेणोन्नता उत्कृष्टा इनता प्रभुता यस्य स तेन । तेन कामेन ते पुरुषा जिताः स्ववशीकृताः । ते के ये वियोगिनः सस्त्रीकाः स्त्रीरहिता वा स्मरतापपराजिताः सन्तः स्त्रीभिः सहासक्ता बभूवुरिति भावः । यद्वा कीदृशी रसा सारसारसा आरस्यत इत्यारसः शब्दः सारसानां यश्शब्दस्तद्विशिष्टा ॥ १० ॥

नुन्नमनामधुनानाऽऽश्रयतिमृतिंकोविनाऽङ्ग
नामधुनाना ॥ इतिललनामधुनानाविध
मधयत्किलतदर्थनामधुनाना ॥ ११ ॥

नुन्नेति—अधुना वसन्तसमये मधुना वसन्तेन नुन्नम्प्रेरितं मनश्चित्तं यस्य स कः ना पुरुषो योऽङ्गनां रमणां विना मृतिं मृत्युं नाश्रयति न प्राप्नोति । अपि तु सर्वोऽपि मृतिमाश्रयत्येव । किल सत्ये । इति हेतोर्ललना स्त्री विधं नानाप्रकारं मधु मद्यम् अधयत् अपिबत् । कीदृशी ललना तदर्थनां तस्य नायकस्याऽर्थना याच्ञा ताम् अधुनाना अनिराकुर्वाणा अङ्गीकुर्वाणेत्यर्थः । रतिसमये पुरुषः अस्माकं वशतामेष्यतीत्यानन्देन मधु अपिबदितिभावः । यद्वातन्मरणशङ्कया मधु अधरामृतमपाययदितिभावः ११॥

पिकोऽपिकोपिकोपिकोवियोगिनीरभर्त्सं
यत् ॥ वचांसिभङ्गऽऽमालपन्नितानिताानि
तानिताः ॥ १२ ॥

पिकेति—कोपिकः कोपोऽस्यास्तीति कोपी कोप्येव कोपिकः सकोप इत्यर्थः । यद्वा । कोपयतीति कोपिकस्तासामेव कोपकर्त्तेति यावत्।अपि सम्भावनायाम्। एतादृशः कोपि पिकः कोकिलस्ता वियोगिनीरभर्त्सयत् भर्त्सितवान्। "भर्त्सनं त्वपकारगीः"इत्यमरः । किं कुर्वन् भङ्गं र-

चनाविशेषमितानि प्राप्तानि । तानि तानि वचांसि वसन्तकालीनानि आलपन् अकुर्वन् ॥ १२ ॥

श्रीराऽऽपिकलापेनप्रवृद्धमाऽऽम्रावलिषुपिक
लापेन ॥ नकलापिकलापेनप्रणर्त्तनमकारि
वागपिकलाऽऽपेन ॥ १३ ॥

श्रीरापीति–कलापेन कलाः पातीति कलापश्चन्द्रस्तेन श्रीः शोभा आपि प्राप्ता। पिकलापेन पिकानां लापः संलापस्तेन आम्रावलिषु आम्रवृक्षपङ्क्तिषु प्रवृद्धमतिवृद्धिं प्राप्तम् । कलापिकलापेन कलापा बर्हा एषां सन्तीति कलापिनो मयूरास्तेषां कलापेन यूथेन प्रणर्त्तनं प्रकृष्टं नृत्यं नाऽकारीति न किन्तु कृतमेवेत्यर्थः । च पुनः कला परिस्फुटा वाग्प्याप प्राप्ता ॥ १३ ॥

सहकारवृतेसमयेसहकारहणस्यकेनस
स्मारपदम् ॥ सहकारमुपरिकान्तैःसह
कारमणीपुरःसकलवर्णमपि ॥ १४ ॥

सहकारेति– सहकारवृते सहकार आम्रवृक्षस्तत्पुष्पमपि सहकारं तेन वृते समये वसन्ते के पुरुषाः रहणस्य स्त्रीविरहजन्यदुःखस्य सहकाः सहनक्षमाः न केपीत्यर्थः । का रमणी स्त्री कान्तैः सह भर्तृभिः सह उपरि अन्ते सहकारं

हकारवर्णसहितं पुर आदौ सकलवर्णमपि कश्च लश्च वर्णौ ताभ्यां सहितं पदं वाक्यं कलहमिति यावत् । सस्मार न स्मृतवती। तथा च सर्वैव कलहं विस्मृत्य सङ्गमं चकारेति भावः ॥ १४ ॥

अधिगतकामधुराऽगादगमेत्यभ्रमरपटलिकामधुरागात् ॥ पीत्वोत्कामधुरागाद्‌द्रुतमकृततत:श्रियोधिकामधुरागात् ॥

अधीति—रागात्प्रीतेः मधु पुष्परसं पीत्वा द्रुतं ... उत्का उत्कण्ठिता सती अधिगतकामधुरा अधिगता प्राप्ता कामस्य धूर्भारो यया सा। त्वयैतत् कर्त्तव्यमिति स्वीकृतमन्मथाज्ञासमुदायेति यावत् । एवंभूता भ्रमरपटलिका मधुपश्रेणिरगाद्वृक्षात् अगं वृक्षमेत्य प्राप्य मधुरा गाः वाणीरकृताऽकरोत् । ततः भ्रमरमधुरगुञ्जितात् । मधुर्वसन्तोऽधिकाः श्रियः शोभा आगात् प्राप ॥ १५ ॥

नसमानसमानसमानसमागममापसमीक्ष्यवसन्तनभः ॥ भ्रमदभ्रमदभ्रमदभ्रमदभ्रमरच्छलतःखलुकामिजनः ॥१६॥

नसमानेति—खलु निश्चये कामिजनः कामुकसमूहः समानसमानसमानसमागमं न आप । मानसे मानो मानसमानस्तेन सह वर्त्तमानः समानसमानः समानसमानश्चासौ समानः बन्धुश्च । मनोवर्त्तिमानसहितबन्धुरिति

यावत् । तस्य समागमं न प्रापेति काकुः । प्रापैवेत्यर्थः । यद्वा स कामिजनः मानसे चित्ते यो मानः तेन समानस्तुल्यो यः समागमः तं खलु निश्चितं न प्राप । किन्तु वसन्तोद्दीपितः सन् अकालसमागमं प्रापेत्यर्थः । किं कृत्वा वसन्तनभः वसन्तसम्बन्धि नभ आकाशं समीक्ष्य दृष्ट्वा । कीदृशं नभः अदभ्रमदभ्रमदभ्रमरच्छलतः भ्रमदभ्रम् अदभ्रं बहुलं मदो येषां ते अदभ्रमदाः मेघमालात्वेन स्वस्मिन् भ्रमं ददतीति भ्रमदाः अदभ्रमदाश्च ते भ्रमदाश्च ते भ्रमराश्च तेषां छलतो व्याजात् भ्रमन्त्यभ्राणि मेघा यत्र तत् "अभ्रंमेघो वारिवाहः । अदभ्रं बहुलं बहु" इति चामरः ॥ १६ ॥

गतमत्रचयेनगृहादसमुत्तरतान्तरतान्तरतान्तरताम् ॥ परएवविकारइयायवृहत्तमसन्तमसन्तऽमसन्तऽमसम् ॥ १७ ॥

गतमिति—अत्र वसन्तसमये च पुनर्येन पुरुषेण गृहाद्गतं निर्गतं परः शत्रुः विकारो धातुविकार एव तम् इयाय प्राप । कीदृशेन अन्तः अतान्तरतान्तरताम् असमुत्तरता अन्तः हृदि अतान्तमविस्तीर्णं यद्रतान्तरं सुरतान्तरं तस्य भावस्तत्ता ताम् असमुत्तरताम् अप्राप्तवता । यद्वा । अन्तः हृदि अतान्तम् असमाप्तं रतं यस्याः सा अतान्तरता अन्तर्मनसा अतति स्वामिनं गच्छति सततं ध्यायतीति यावत् । सा

अन्तरता अतान्तरता चासौ अन्तरता चेति सा ताम् ।
मुत्तरता उल्लङ्घयता त्यक्तवता । तृप्तवनतरणयोरिति
किंभूतं पुरुषम् बृहत्तमसन्तमसं बृहत्तममधिकं
मज्ञानं यस्य तम् । एवम् असन्तमविवेकिनम् ।
विकारः असन् अपरिहार्योऽसाधुर्वा ॥ १७ ॥

क्रुधिकान्तवशंनवदामसमापनयापनया
ऽऽपनयाऽपनया ॥ तमृतेऽनुशयेनचता
मऽश्नैरवतारवताऽऽरवताऽरवता ॥ १८ ॥

क्रुधीति—या स्त्री क्रुधि क्रोधे सति
पनया नवं च तद्दाम च नवदाम नवीना माला
पनं समाप्तिस्तया या यापना कालातिक्रमस्तेन । करणेन
कान्तवशं नायकसमीपं न आप न प्राप । "यापनं कालवि-
क्षेपे" इति हैमः । कीदृशी या अपनया अपगतो नयो नीति-
र्यस्यास्सा । अरवता मूकत्वम् अनुशयेन पश्चात्तापेन सह
अशनैश्शीघ्रं तं कान्तम् ऋते विना तां नायिकम् आर प्राप ।
कीदृशेनाऽनुशयेन आसमन्तात् अवतारवता अवतारो-
स्यास्तीत्यवतारवान् तेन तदानीमुत्पन्नेन । चत खेदे ॥ १८ ॥

युग्मम्—नभसोविवरंकुसुमेक्षणभागऽतरो
ऽगतरोगतरोऽगतरो ॥ वदकान्तमवेक्ष्य
यथाऽध्वमधावरमेवरमेवरमेवरमे ॥ १९ ॥

श्रितेतिगामऽनागतस्ववन्धुकामनागतः ॥
पराऽऽपनामनाऽगतस्तताम कामनागतः॥२०॥

नभस इति–श्रितेति–युग्मम् । हेवर श्रेष्ठ अगतरो हे पर्वतसम्बन्धिवृक्ष त्वं नभस आकाशस्य विवरमन्तरं आतरः तीर्णवानसि अत्युच्चोसीत्यर्थः । कीदृशस्त्वम् कुसुमेक्षणभाक् कुसुमान्येवेक्षणानि नेत्राणि तद्भाक् तद्युक्तः । एवं गतरोगतरः अतिशयितो रोगो रोगतरः गतो रोगतरो यस्य यस्माद्वा सः दुःसहरोगरहित इत्यर्थः। अतो मे कान्तमवेक्ष्य दृष्ट्वा तथा वद कथय यथा अद्य मधौ वसन्ते अरमेव शीघ्रमेव रमेव लक्ष्मीरिवारमे क्रीडां करोमि। "लघुक्षिप्रमरं द्रुतम्" इत्यमरः। "क्षीराब्धितनयारमा" इत्यमरः॥१९॥ श्रितेति–परा उत्कृष्टा नायिका इत्यनेन प्रकारेण श्रिता आश्रिताऽऽर्थाद्वृक्षमेव । अतः अगत एव तस्माद्वृक्षात् मनाक् ईषदपि गां प्रत्युत्तरवचनं न आप न प्राप । कीदृशी । अनागतस्ववन्धुका न आगतः स्वकीयो वन्धुर्भर्त्ता यस्याः सा । नाम निश्चये । कामनागतः काम एव नागः कृष्णसर्पस्तस्मात्तताम ताम्यति स्म । अनेन प्रलापोन्मादव्याधय इति तिस्रो दशाः सूचिताः ॥ २० ॥

कालनादिवसंतंकुसुमशरमसोढव्यना
दिवसन्तम् ॥ अलिभिरनादिवसन्तंदृष्ट्वा
यत्राऽऽत्मनोऽर्थनादिवसन्तम् ॥ २१ ॥

केति–का ललना कामिनी तं दिवसं तस्मिन्
सन्तऋतौ कुसुमशरमसोढ सढोवती न
दिवसमिति"कालाध्वनोरत्यन्तसंयोगे"इति
कुसुमशरं हृदि मानसे अनादि सर्वदा वसन्तम्
न्तम् । यत्र दिवसे सन्तं वर्त्तमानं वसन्तम् ऋतुं
अलिभिर्भ्रमरैरनादि नादोऽकारीत्यर्थः । उत्प्रेक्षते ।
नोऽर्थनादिव आत्मीयसुरतप्रार्थनादिव । तथाच
अपि सुरतं प्रार्थयन्ति किमुत मानुषीति भावः ॥ २१

स्वयमथमन्दारितयायुक्तोयुक्तंनलस्सम
न्दारितया ॥ आरामन्दारितयामदने
नधियाऽऽपदुत्तमन्दारितया ॥ २२ ॥

स्वयमिति– अथाऽनन्तरं स नलः स्वयं
युक्तं मन्दारा अस्य सन्तीति मन्दारी मन्दारिणो भावो
न्दारिता तया युक्तं सहितं मन्दारवृक्षसमूहसहितम्
उत्तमं श्रेष्ठमाराममुपवनमापत्प्राप। कीदृशो नलः
युक्तः मन्दा अरयोऽस्य सन्त्यसौ मन्दारी तस्य
ता तया सहितः कर्त्तव्यविचाराऽनभिज्ञशत्रुत्वसहितः
यद्वा मन्दश्चासौ अरिश्चेति मन्दारिः तस्य भावः
तया। हेतौ तृतीया। शत्रुभावेन कामेन खण्डितधिया
इत्यर्थः । एवं मदनेन स्मरेण दारितया खण्डितया बुद्ध्या
युक्तः । एवं दारितया युक्तः दाराः अस्य सन्तीति दारी

दारिणो भावो दारिता तथा सहितः स्त्रीमत्तया संयुक्तः ॥ २२ ॥

अनुव्रतासमाननंसमाननन्दभीमजा ॥
तमिन्दुनासमाननंसमाननन्दनेवने ॥ २३ ॥

अनुव्रतेति—समाननं मानना पूजा तया सहितं पूज्यमित्यर्थः । इन्दुना समाननं चन्द्रसदृशमुखं तं नलम् अनुव्रता अनुगता अनुबद्धा वा समा सलक्ष्मीका भीमजा दमयन्ती समाननन्दने समानं सदृशं नन्दनम् इन्द्रवनं यस्य तस्मिन् वने ननन्द आनन्दं प्राप्तवती । समाननन्देति वा क्रियापदम् ॥ २३ ॥

इहरुचिरामावलयस्वसदृशमितिपृथक्
प्रियस्यरामावलयः ॥ प्राप्तारामावलय
स्फुरोगिरायदुदरेभिरामावलयः ॥ २४ ॥

इहेति—हेसुन्दरि इह वने रुचिरां मनोज्ञां दृशं चक्षुरावलयस्व आवर्त्तय । इत्यनेन प्रकारेण प्रियस्य भर्त्तुर्गिरा वचनेन ताः रामावलयः स्त्रीश्रेणयः पृथक् एकैकशः प्राप्तारामा आरामगता अभूवन्नरण्यं जग्मुरित्यर्थः । कीदृश्यः वलयैः कटकैः स्फुरन्तीति । क्विप् । वलयस्फुरः । "कटकं वलयोऽस्त्रियाम्" इत्यमरः । अथवा प्रियस्य वचनेन स्फुरस्तुष्टा बभूवुः।कथंभूताःप्राप्तारामावलयः प्राप्ता आरामाणाम् आवलयो याभिस्ता इत्यर्थः । ताः का यदुदरे यासामुदरेऽ-

भिरामाः सुन्दरावलयस्त्रिवलीभङ्गा इत्यर्थः । "
पुंसि वलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरः ॥ २४ ॥

नवकुसुमानमनागागन्तुंनैच्छत्परासमा-
नमनागाः ॥ अजनिपुमानमनागाऽऽश्रि-
त्यससत्कुसुमदानमानमऽनागाः ॥ २५ ॥

नवेति–नवकुसुमानमनागाः　नवैः
नवकुसुमानमनास्तादृशा अगा वृक्षा यासु ताः गाः वनभुवः
गन्तुं यातुं पराऽन्या स्त्री नैच्छन्नायासीदिति । कीदृशी
मनाः समानं मानसहितं मनो यस्याः सा कृतमानेत्यर्थः ।
स पुमान्सापराधः पुरुषः अमनाक् अनल्पं सत् सुकुसुमदा-
नमानं सुकुसुमानां दानमेव मानः सम्मानना तामाश्रित्य
अनागा निरपराधोऽजनि जातः । सपुष्पवनं गंतुमनिच्छन्त्या
मानिन्याः स्वावचितसत्पुष्पदानेन मानमपाचकार। सत्कुसु-
मदामदानमिति पाठे पुष्पमालादानमाश्रित्येत्यर्थः ॥२५॥

त्रिभिर्विशेषकम्–रुपितंसखिसादमसुष्यल
सत्तनुतेतनुतेतनुतेतनुते ॥ ननवाननवाननं
वाननवागिहतेचरणेमृतिमेष्यतिसः ॥ २६ ॥

रुषितामिति–नायकप्रेरितदूतीवाक्यम् । हे सखि लस-
त्तनुतेतनुते लसन्ती तनुर्यस्या
तया इता प्राप्ता नुतिःस्तुतिर्यया सा तत्सम्बुद्धिः
शरीरताल्लब्धस्तुते । ते तव तनु स्वल्पमपि

रोषोऽमुष्य तव प्रियस्य सादमवसन्नतां तनुते विस्ता-
यति। त्वयि रुष्टायामस्य बहु दुःखं जायत इति भावः।
स तव कान्तः इहास्मिन् वसन्ते ते चरणे त्वत्पदे नवाक्
अवाक् अधोमुखः न अवाक् अनवाक् अभिमुखः अथवा
अवाक् मूकः अनवाक् स्तुतिवाक्यसहितः सन्नित्यर्थः।
कथंभूतः वाननवाननवान् वानं शुष्कं नवं यौवनोदयसु-
न्दरमाननं मुखं यस्य स तादृशः स प्रियः मृतिं न एष्यति
इति नापि तु मरिष्यत्येव। त्वच्चरणपतितस्याऽस्य प्राणास्ति-
ष्ठन्ति नो चेन्मदनव्यथया शुष्कमुखस्य मरणमेवेति भावः।
मृतिमित्यत्र नतिमिति पाठे नतिं प्रणामम् एष्यतीत्यर्थः।
"स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यमरः। "वानं शुष्के गतौ
गन्धे" इति वैजयन्ती। "पराङ्मुखः पराचीनः स्यादवाङप्यधो
मुखः" इत्यमरः। इण्गतावित्यस्य लृटि एष्यतीति॥२६॥

पुनस्तामेवाऽऽह—

अपिचैत्यनगानवतानवतानवतानवताऽ
स्ततरानधुना॥ इहसौख्यमगोचरऽमा
चरमाचरमाचरमास्यनरम्यतरा॥२७॥

अपीति—हे सखि अवतानवता अवतानोविस्तारो
ऽस्यास्तीत्यवतानवान् तेन मधुना वसन्तेन नवता नवी-
नता न अस्ततराऽतिशयेन त्याज्या बताश्चर्यं। किन्तु
वसन्तो नूतनतां त्यजिष्यत्येवेति भावः। किं कृत्वा नगान्वृ-

क्षानेत्य प्राप्य इह प्रौढवसन्तेऽगोचरं वक्तुमशक्यं आचर लभस्व।अस्य वसन्तस्य चरमा पश्चिमा रमा श्च पुनः मा शोभा रम्यतरा सुन्दरी न भवति। भर्त्रा सह रत्यादिकं सुखमनुभूयताम्। पश्चात्तनी शोभा न भव्येति भावः। समाः। "नवीनो नूतनो नवः" इति चामरः। आचरेति चर तिभक्षणयोरित्यस्य लोटि ॥ २७॥

इतिलालिकयाऽलिकयातकचैरतिकालिक
याऽऽलिकयाकथिता॥दयितंसमयासमया
दयराव्यहरत्समयासमयाचतया ॥ २८॥

इतीति—इत्यनेन प्रकारेण लालिकया आलिकया सख्या कथिता उक्ता अपरा स्त्री दयितं भर्तुः समीपं समयात्।अगात् दयितमिति समयायोगे याअभित"इत्यादिना द्वितीया।"समयान्तिकमध्ययोः व्ययवर्गे मेदिनी। समयादिति यातेर्लङि।च पुनः मया लक्ष्म्या समया तुल्यया तया स्त्रिया सह क्रीड। कीदृश्या अलिकयातकचैःअलिके याताः प्राप्ता कचाश्चूर्णकुन्तलास्तैरतिका अलिकया श्यामलया विशेषणम्। "ललाटमलिकं गोधिः" रुहः" इति चामरः॥ २८॥

कश्चिन्मानवतीं मानयन्नाह—

अतिरुचिमानऽस्तबकःसरस्तटोऽयंविची

यमानस्तवकः ॥ इहखलुमानस्तवकःप्रि
यामितिपरोऽनयत्समानस्तवकः ॥ २९ ॥

अतीति—हे सुन्दरि अयंविचीयमानस्तवको विभिः पक्षिभिर्भ्रमरप्रभृतिभिश्चीयमाना मकरन्दपानायान्विष्यमाणाः स्तवकाः पुष्पगुच्छा यस्मिंस्ताहक् । अथ वा विचीयमाना अवचीयमानास्समृद्धाः स्तवका यस्मिंस्ताहक् अस्तवकः अस्ता गता वका यस्मात्ताहक् सरस्तटस्तडागतीरम् । अतिरुचिमान् अतिसुन्दरः । इहाऽस्मिन्स्थले तव कः मानः खलु निश्चितं कः प्रस्ताव इति यावत्।समानः स्तवकः स्तुतिर्यस्य स ताहक्कामुकः प्रियां स्त्रियम् अनयदनैषीद्रत्यै इति यावत्। पुष्पवासलोभभ्रमद्भ्रमरे वकादिराहित्येन निर्जने मानोऽनुचित इत्येताहशान्यस्थलाभावादिह सम्भोगो भवत्विति हस्ते गृहीत्वा कुञ्जमविशदिति भावः । अनयदिति नियो लङि ॥ २९ ॥

अरुणतरपरागस्यप्रसवैःप्रेक्षिष्टनपुनरप-
राऽगस्य ॥ हसितैऽरपरागस्यस्वैस्तिष्ठ
न्त्यपिलवेप्सुरऽपरागस्य ॥ ३० ॥

अरुणेति—अपरान्याङ्गनाऽरुणतरपरागस्य अरुणतराः अतिशयेनारुणाः परागाः कुसुमरजांसि यस्य ताहशस्यास्य अगस्य वृक्षस्य । स्वैः स्वकीयैर्हसितैर्हासैरपरागस्य अपगतलौहित्यस्य अपराक् संमुखं लवेप्सुः पुष्पम-

वचिकीर्षुस्तिष्ठन्त्यपि विद्यमानाऽपि प्रसवं पुष्पं न प्रैक्षिष्ट नाऽपश्यत् । लोहितकुसुमस्य स्वहासेन भूतत्वाद्विस्मयो जात इति भावः । "लवोऽभिलावो लवने स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने । नगावर्गौ" इत्यमरः । ईक्ष लुङ्याटि सिचीटि रूपम् ॥ ३० ॥

अवेक्ष्यपल्लवालयानऽगाञ्छ्रितालवालया ॥
लतातयेवबालयाबभेऽन्ययाववालया ॥३१॥

अवेक्ष्येति—अन्यया बालया षोडशवार्षिक्या लता तया इव लतात्वेन रूपेणेव बभे शुशुभे । अन्या का या पल्लवालयान् नवपत्रयुक्तान् अगान् वृक्षान् अवेक्ष्य दृष्ट्वा ववाल उल्ललास।अन्याऽपि लता श्रितालवाला आश्रयभूतान् वृक्षान् दृष्ट्वा उल्लसत्येवेति भावः । यद्वा ववाल चचालेत्यर्थः । यथा लता वृक्षानधिरोहितुं चलति तथेति भावः । बल प्राणने स्खलने वा धातोः रूपम् । कथंभूतया श्रितालवालया पल्लवानयनार्थं श्रितमाश्रितमालवालं यया तयेत्यर्थः ॥ ३१ ॥

व्रततीनामालीनांमध्येन्योन्यचिनुताङ्ग-
नामालीनाम् ॥ अप्येनामालीनास्मि-
ताच्चजानन्मदाच्चनामाऽऽलीनाम् ॥ ३२ ॥

व्रततीनामिति—अन्यः कामी आलीनां सखीनां स्मिताद्धासात् च पुनरलीनां भ्रमराणां मदाज्जानन्नपि कलयन्नपि अङ्गनां स्त्रियं व्यचिनुत विलोकयामास । किंभूतां व्रततीनां लतानां मध्ये आलीनां सखीनां च मध्ये आलीनां गुप्ताम् । नाम संभावनायाम्। आदौ सर्वा एव लता इति ज्ञानमासीत्। इदानीं काचित् हसति कुत्रचित् भ्रमराः स्वनन्ति इति ज्ञात्वा तत्राङ्गनामन्वेष्टुं गतवानित्यर्थः ॥ ३२ ॥

कमितुःकलुषाक्षिसुखार्थनभागऽपरागऽपरा
ऽगपरागपरा ॥ स्थितिमापतथैवहतस्स
पुमाननयाऽऽननयाननयाननया ॥ ३३ ॥

कमितुरिति—अगपरागपरा वृक्षमकरन्ददर्शनोन्मुखी अत एव कलुषाक्षिसुखार्थनभाक् कलुषं परागेण यदक्षि तस्य यत्सुखं परागनिष्कासनात्तस्य यार्थना याञ्चा तां भजतीति तद्भाक् अपराङ्गना कमितुः कमयतीति कमिता भर्त्ता तस्याऽपराक्संमुखं स्थितिं स्थानमाप प्राप । अनया अङ्गनया स पुमान् पतिस्तथैव तेन प्रकारेण भर्त्तुरभिमुखस्थितित्वेन हृत इति न किन्तु वशीकृतः । अनया कया आननयाननया आननं मुखं तस्य यानं भर्तृमुखसमीपप्रापणं तत्र नयो वैदग्ध्यं यस्याः सा । नयनपतितमकरन्दं दूरीकुर्विति नायकाभिमुखं मुखं प्रसारयन्ती तं जहारेति भावः३३।

स्वमनेनसमाऽऽयतयाव्यधितागःस्वेवक

श्चनसमायतया ॥ ऋजुमानसमायतया
तस्मैनाऽक्रोधिजीवनसमायतया ॥ ३४ ॥

स्वमिति—कश्चन कामी तस्याः स्वभार्य्यायां आयतया अतिदीर्घया समायतया मायया कपटेन वर्त्तमानः समायस्तस्य भावः समायता तया आगःसु एव अपराधेषु सत्स्वपि स्वमात्मानमनेन समपराधरहितं व्यधित चक्रे। ऋजुमानसं कोमलचित्तम् . . या प्राप्ततया अर्थात्कामिन्या जीवनसमाय प्राणतुल्याय तस्मै भर्त्रे नाक्रोधि न कुपितम् ॥ ३४ ॥

अभवदनेनानाविस्मयदोऽन्योमानिनी-
जनेनानावि ॥ अतिसुजनेनानाविस्ख
लनंयदुपवनमनेनानावि ॥ ३५ ॥

अभवदिति—मानिनीजने विस्मयदोऽद्भुतदोऽन्योऽपरो ना पुरुषस्तस्माद्धेतोरनेना अनपराधोऽभवद्भूत। यद्यस्मादनेनातिसुजनेनातिसुहृज्जनेन पुंसा नानाविना नानाविधा वयः पक्षिणो यस्मिंस्तादृशमुपवनमारामोऽनावि स्स्वलनं वर्णनावैपरीत्यमपशब्दादि वा तद्रहितं यथा स्यात्तथाऽनावि स्तुतम्। कृतापराधः कश्चित्पुमानुद्यानवनवर्णनयैव तां प्रासादयदितिभावः। अनावीति णु स्तुतावित्यस्य लुङि रूपम् ॥ ३५ ॥

जनादसोऽस्समानतःपदाहतिंसमानतः॥परो
दधौसमानतःस्वमूर्ध्निभासमानतः ॥ ३६ ॥

जनादिति—परोऽन्यः कामुकः असोस्समानतः असुः प्राणः तस्य समानतस्सदृशात् प्राणतुल्यात्समानतः साहंकारात् भासमानतः शोभमानात् जनात् कान्ताजनात् पदाहतिं चरणेन आहतिमाघातं समानतोऽतिनम्रस्सन् स्वमूर्ध्नि दधौ । स्वशिरसि प्रसादमिव दधारेत्यर्थः ॥ ३६ ॥

तनुच्छटोत्तमालयातयाभुवोत्तमालया ॥
अहारिशीतमालयाऽनिलाऽवधूतमालया ३७॥

तनुच्छटेति—तया उद्यानभुवा उत्तमालया उद्गता उच्छ्रितास्तमालास्तमालवृक्षा यस्यां सा तादृश्या । पुनः शीतमालयानिलावधूतमालया शीतो यो मालयोऽनिलो मलयगिरिसम्भवो वायुस्तेनाऽवधूता कम्पिता माला वृक्षश्रेणी यस्यां तादृश्या भुवा उत्तमालया उत्तम आलयो गृहं यस्यास्सा तादृशी तनुच्छटा स्त्रीसमूहोऽहारि हृता । तथा च मन्दसुगन्धिशीतलवायुसम्बन्धेन मनोहरे उद्याने कान्तसहिताः सर्वा विलासिन्य उत्तमगृहं त्यक्त्वा रमणार्थं ययुरिति भावः । "वेल्लितप्रेङ्खिता धूतचलिताकम्पिताधुते" इत्यमरः। "छटा कान्तौ संहतौ च" इति धरणिरिति भरतः ॥ ३७ ॥

श्रितलसदारामाभिःप्राप्येतिजनोविहृति

मुदाराऽऽमाभिः ॥ आरादाऽऽराऽमाभि
स्फुरितसरोजंसरस्तदारामाभिः ॥ ३८ ॥

श्रितेति– जनः कामुकः श्रितलसदारामाभिः श्रित श्रितो लसन्देदीप्यमान आरामो याभिस्ताहशीभिः भिरमूभी रामाभिः स्त्रीभिः अमा सह उदारां श्रेष्ठां विहर्ति विहारम् इत्यनेन प्रकारेण प्राप्य तदा तदानीम् आरात्समीपेऽभिस्फुरितसरोजम् अभि सर्वतः स्फुरितानि फुल्लानि सरोजानि पद्मानि यस्मिस्ताहशं सरस्तडागम् . प्राप्तवान् । "अमा सह समीपे च । कासारः सरसी .. इत्यमरः ॥ ३८ ॥

किमपस्सरसीमायाधामगुणामृतप्रसर-
सीमायाः ॥ द्रुतमितिसरसीमायात्यक्तो
भैम्यानलश्चसरसीमायात् ॥ ३९ ॥

किमपइति–हे दमयन्ति त्वमिमा अपः जलानि किं गच्छसि विहर्तुमिति शेषः । या त्वं गुणामृतप्रसरसीमाया धाम गुणा एवाऽमृतं तस्य प्रसरो विसर्पणं प्रवाह आधिक्यं वा तस्य सीमा मर्यादा तस्या धाम गृहम् । अमृतशब्देन सुधा जलं चाभिधीयते।गुणामृतप्रवाहः .. स्थित इति भावः । इत्येवमुक्त्वा स नलो रसी रसिकः मायात्यक्तो व्याजहीनोऽदम्भी भैम्या सह द्रुतं शीघ्रं .. सर आयादगमद्विहर्त्तुमिति शेषः। "आपः स्त्री भूम्नि वार्वारि।

त्यक्तं हीनं विधुतंसमुज्झितं धूतमुत्सृष्टम्" इत्यमरः। आयादिति यातेर्लिङि ॥ ३९ ॥

गतपङ्काःसारस्यःश्रियोऽस्यजन्हुर्मनोऽधि काःसारस्य ॥ अपिकोकास्सारस्यस्थि ताःकुरर्य्यश्चहंसिकाःसारस्यः ॥ ४० ॥

गतेति—सारस्यः सरस इमाः सारस्यःसरःसम्बन्धिन्यः श्रियः शोभाः। कथंभूताः गतश्च्युतः पङ्को याभ्यस्तादृश्यः निर्मलाः अधिकाः श्रेष्ठाः। यद्वा कानि जलानि अधिकृत्य वर्त्तन्ते ताः सारस्य सारभूतस्य श्रेष्ठस्याऽस्य नलस्य मनो हृदयं जहुर्हृतवत्यः। सारस्यस्थिताः आरस्यत इत्यारसः शब्दस्तस्य भाव आरस्यम् आरस्येन सहितं सारस्यं तत्र स्थिताः कृतमधुरध्वनयः अथवा सरसस्य भावः सारस्यं तत्र स्थिता विख्याता। सारस्याज्जलसाहित्याद्वा स्थिताः कोकाश्चक्रवाकाः कुर्यः कुररपक्षिस्त्रियः हंसिका हंसस्त्रियः सारस्यः सारसानां स्त्रियोपि मनो जन्हुः। सरःसम्बन्धिशोभादर्शनेन कोकादिदर्शनेन च मुमुद इति तात्पर्य्यम् "पङ्कोऽस्त्रीशादकर्दमौ। सारो बले स्थिरांशेच। कोकश्चक्रश्चक्रवाकः" इत्यमरः। जहुरिति हृञो लिटि ॥४०॥

काक्षतिरस्तिमिताभिःस्फुटमद्भिर्विहतिर स्तिमिताभिः ॥ अनतितरस्तिमिताभिः कमेत्ययदशङ्किधृतिभिरस्तिमिताभिः ४१॥

काक्षतिरिति—अनतितरस्तिमि अत्यन्तं तरो बलं वा येषां तेऽतितरसः न विद्यन्ते अतितरसस्तिमयो . . शेषा यस्मिंस्ताद्दशं तिमिनक्रादिरहितं कं जलमेत्य धृतिभिर्द्धैर्यैरस्ति त्यागमिताभिस्त्यक्तधैर्य्याभिः । यद्वा र्य्यैःअस्तिमिताभिः अस्थगिताभिः चञ्चलाभिरित्यर्थः भिः स्त्रीभिः अशङ्कि शंकितम्।अतर्कीति पाठे . किमतर्कि तदाह यत् यस्मात् अस्ति क्षेपणम् इताभिःप्राप्ता-भिः तरङ्गक्षिप्ताभिरित्यर्थः । त . ५ . स्फुटं प्रत्यक्षमियं विहृतिः क्रीडा अतः का . न कापीत्यर्थः। तिमिनक्रादिरहिते सरसि तासां स्वभावभीरुत्वमेव । "राजीवः शकुलस्तिमिः। तरसी रंहसी । कं शिरोम्बुनोः" इत्यमरः । शकि भये . चिणिलुङि ॥ ४१ ॥

अलिर्मिलत्परागतःसरोरुहात्परागतः ॥ मुखं मुदाऽपरागऽतस्तदीयऽऽमापरागतः ॥ ४२ ॥

अलिरिति—अलिर्भ्रमरो मिलत्परागतो मिलन्नुल्लसन्परागः कुसुमरेणुर्यस्मिंस्ताद्दशादतः अस्मात्सरोरुहात्कमलात्परागतः परावृत्तः ।अपराक् संमुखं तदीयं स्त्रीमणसम्बन्धि मुखं मुदा हर्षेण रागतोऽनुरागादाप प्राप्तवान्। सौरभाधिक्येन कमलं विहाय तन्मुखमाशिश्रियदिति भावः॥४२॥

अथकामानलिनीनांस्त्रीणांसंवेमनोरमा

नलिनीनाम् ॥ विधुततमानलिनीनां प
ङ्क्तिर्विततानसम्भ्रमानलिनीनाम्॥४३॥

अथेति–अथाऽनन्तरं कामानलिनीनां कन्दर्पानलयुक्तानां कामुकीनां नलिनीनां नलयुक्तानां नलः पतित्वेन अस्या अस्तीति नलशब्दादिनिप्रत्ययः ततो ङीप्।स्त्रीणां सङ्घैः समूहैः नलिनीनां कमलिनीनां पङ्क्तिः विधुततमाऽत्यन्तं कम्पिता स्नानवशात्पद्मावचयाद्वा।मनोज्ञा सुन्दरी अलिनीनां भ्रमरीणां संभ्रमान्भयध्वनींस्तताना । नलसहितारामान्दोलिता कमलिनी भृङ्गी झङ्कारानतनोदिति भावः ॥४३॥

सरःश्रियोऽन्तरंगतःसरोजनृत्तरङ्गतः ॥
भयंमहत्तरङ्गतस्तनूजनस्तरङ्गतः ॥ ४४ ॥

सरइति–सरःश्रियः सरोलक्ष्म्या अन्तरं मध्यं स्वरूपत्वं वा गतः प्राप्तः । तनूजनः स्त्रीसमूहः सरोजनृत्तरङ्गतः सरोजानां कमलानां नृत्तं नर्तनं तस्य रङ्गो रङ्गभूमेः तरङ्गतः ऊर्म्मिभिर्महत्तरं अतिशयेन महद्भयं साध्वसं गतो गतवान् । कमलनर्त्तनहेतुतरङ्गान्नक्रहतिकम्पशङ्कया स्त्रीजनो भीतो बभूवेति भावः। "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनिच" इति "लास्यं नृत्तं चनर्त्तने" इत्यमरः ॥ ४४ ॥

अथनीरात्सारसतःफेनपरीताद्यथाम्बरा
त्सारसतः ॥ अतिमुखरात्सारसतस्तीर

मितास्त्रीततिश्चिरात्सारसतः ॥ ४५ ॥

अथेति—अथ जलविहारानन्तरं सा स्त्रीततिः श्चिराद्बहुक्षणात्सारसतः सरसःइदं सारसं तडागजलात् । सारसतः सरसः इदं सारसं क्रीडनं विहाय । ल्यब्लोपे पञ्चमी । नि . अतिमुखरात् रसतः शब्दायमानात् । सारसतः विशेषाद्धेतोः अतिमुखरादतिवाचालात् फेनपरीतात् फेन व्याप्तात्तीरं तटम् इता प्राप्त।उत्प्रेक्षते अम्बरात् यथा अम्बरादिवेत्यर्थः । इवार्थे यथा । आकाशपक्षे साराणि श्रेष्ठानि सन्ति नक्षत्राणि यस्मिंस्तादृशात् परीतं जलं नक्षत्रवदाकाशप्रायं यथा वतरन्ति एवं जलात् स्त्रियोऽवतेरुरिति भावः। "सत्ये विद्यमाने प्रशस्तेभ्यर्हितेपि सत्" । "व्योमपुष्करमम्बरम्"। "सारो बले स्थिरांशे च" इत्यमरः । रसतइति रस शब्दे इत्यस्मात् शत्रन्तः ॥ ४५ ॥

सचोदयावलीनतस्समुत्प्रभावलीनतः ॥
नयन्ययावलीनतःपदंजनोवलीनतः ॥ ४६ ॥

सचोदयेति—स च जनः स्त्रीसमूहः वलीनतस्त्रिवलीभिरानतः नम्रः अलीन् भ्रमरान् नयन् गात्रादिसौगन्ध्येनाकर्षयन् । अतः सरस्तीरात् पदं स्वस्थानं ययौ।कथंभूतं पदम् उदयावलीनतः उदयाचलप्राप्तात् । यद्वा । [illegible] प्राप्य अव-

लीनात् निमग्नात् इनतः सूर्यात्समुत्प्रभावलि सम्यगुद्गताः प्रभावलयः प्रभाश्रेणयो यस्मिंस्तादृशम् । सूर्येऽस्तमुपयाति स्त्रीजनो गृहं गतवानित्यर्थः। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ॥ ४६ ॥

दिशकामानङ्गेहंमन्योमदनेषुविकृतिमानङ्गेहम् ॥ इतिपरमानंगेहंनलःप्रियामनयदतिविमानंगेहम् ॥ ४७॥

दिशेति—हेअङ्ग प्रिये दमयन्ति अहम् अङ्गे शरीरे मदनेषु विकृतिमान् कामशरविकारवानस्मि । कथंभूतः इहंमन्यः इं कामं हन्तीति इहः इहं कामहन्तारमात्मानं मन्यते इतीहंमन्यः अतः कामानभिलाषान्दिश देहि रत्यभिलाषं पूरयेत्यनेन प्रकारेण नलः प्रियां गेहं गृहम् अनयत् अनैषीत् । कथंभूतं गेहं परमानङ्गेहं परमा उत्कृष्टाऽनङ्गस्य कन्दर्पस्य ईहा चेष्टा वाञ्छा वा यस्मिन् भित्तिलिखितनानाकामचेष्टं कामोद्दीपनं वा अतिविमानम् अतिक्रान्तं विमानं पुष्पकादि येन तत्। तिरस्कृतदेवयानमित्यर्थः । अनयदिति णीञो लङि॥ ४७॥

अरुणमहस्तेनेनप्रापिचसोब्जैर्गुणग्रहस्तेनेन ॥ भाव्यमिहस्तेनेनस्फुटमस्यहितद्गतेंशुहस्तेनेन ॥ ४८ ॥

अरुणेति—इनेन रविणा अरुणा महस्ता अरुणतेज-

स्त्वं प्रापि प्राप्ता। सन्ध्यारागारुणो रविरभूत्। स च
गुणग्रहणमज्ञैः कमलैर्न तेने न विस्तारितः। इह
मये अस्य हि सूर्यस्य तद्गते कमलगते अंशुहस्ते
हस्ते सति अनेन रविणा स्तेनेन चौरेण स्फुटं व्यक्तं
व्यम्। सन्ध्यारागारुणे सूर्य्ये कमलानामारुण्यं
यतः कमलगते रविकरे सति सायंकाले स्वकरद्वारा
क्तां रविरपहरिष्यतीति भावः। "महस्तूत्सवतेजसोः"
मरः। तेने तनोतेर्लिटि ॥ ४८ ॥

यतोयतोयतोयतोरवेर्मरीचिसञ्चयः॥ महा
न्धकारसञ्चयस्ततस्ततस्ततस्ततः॥ ४९ ॥

यतइति—यतो यस्माद्धेतो रवेर्मरीचिसञ्चयो
समूहो यतो यतो यस्माद्यस्मात्स्थानात् यत उपरतः।
उपरमे धातो रूपम्।
महान्धकारसञ्चयो महान्धकारसमूहस्ततः व्याप्तः।
यतो देशाद्रविकिरणा निवृत्तास्तत्र तत्र महान्धकारो
दिति भावः॥ ४९ ॥

छादितरविताऽनेनप्रापिचकालेनसस्वर
वितानेन॥ जितरुधिरवितानेनव्योम्नाच
स्फुरितमुडुभिरऽवितानेन्॥ ५० ॥

छादितेति— अनेन कालेन सायंकालेन

आच्छादितः पिहितो रविर्यस्मिन् सः तस्य भावस्तत्ता सा प्रापि प्राप्ता । कथंभूतेन सस्वरवितानेन सस्वराः सशब्दाः वीनां पक्षिणां ताना विस्तारा यस्मिंस्तादृशेन सशब्दपक्षिसमूहविशिष्टेनेत्यर्थः । एवं जितरुधिरवितानेन जितरुधिरसमूहेनाऽत्यन्तमारक्तेनेत्यर्थः । एवमवितानेन अवीनां मेषाणां वितानो विस्तारो यस्मिंस्तेन । यद्वा । न विद्यते वितानो यज्ञो यस्मिंस्तेन। "सन्ध्यायां सप्त वर्जयेत्" इति स्मृतेः। च पुनर्व्योम्ना आकाशेन उडुभिः। करणेन । स्फुरितं शोभितम् । यद्वा जितरुचिरवितानेनेति पाठे व्योम्ना इत्यस्य विशेषणम् । जितः अतिरुचिरो वितान उल्लोचो येन इत्यर्थः । "क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके । तारकाप्युडु वा स्त्रियाम्" इत्यमरः ॥ ५० ॥

अथोद्यतोऽम्बुराजतःश्रियंखमापराजतः ॥
यथाघटोव्यराजतस्मराग्रगः सराजतः ॥५१॥

अथेति—अथाऽनन्तरमम्बुराजत उदधेः सकाशात् उद्यत उद्गतः स चन्द्रो व्यराजत शुशुभे।खमाकाशं राजतश्चन्द्रात् श्रियमाप प्राप । अथ स्मराग्रगः कामपुरोवर्त्ती राजतो रूप्यमयो घटः शोभते । यथाशब्द इवार्थे । उदधेरुत्थितश्चन्द्रो मदनभूपप्रस्थानाभिषेकरूप्यकलश इव रराजेति तात्पर्यम्। "श्वेतरूप्येऽपि रजतं हेम्निरूप्येसितेत्रिषु" इत्यमरः । व्यराजतेति राजतेर्लङि ॥ ५१ ॥

दधतंकालंकालङ्कालङ्कालंवियोगिनीश
शिनन्तम् ॥ अध्वगकालंकालंकालंकालं
प्रसमीक्षितुंप्रोद्यन्तम् ॥ ५२ ॥

दधतमिति—का वियोगिनी विरहिणी तं शशिनं समीक्षितुं द्रष्टुमलं समर्था न कापीत्यर्थः । कथंभूतं कालं कृष्णवर्णं यत् कालंकालंकालं कलङ्क एव कालङ्कःसचासौ ङ्कालोऽलङ्कारो । रलयोरैक्याद्यमके न दोषः।तं दधतं धारयन्तम्। अध्वगकालम् अध्वगानां पथिकानां कालं नाशकम्। एवं कालंकालं कालेकाले रात्रौ रात्रौ प्रोद्यन्तं प्रकर्षेणोद्यन्तम् । “ कृष्णेनीलासितश्यामकालश्यामलमेचकाः इत्यमरः। कालंकालमिति “नित्यवीप्सयोः”इति द्विर्वचनम्। “कालाध्वनोरत्यन्तसंयोगे द्वितीया” ॥ ५२ ॥

क्षरत्तुषारशीकराःप्रबुद्धकैरवाकराः ॥ ततो
जजृम्भिरेकराजगत्सुशार्वरीकराः ॥ ५३ ॥

क्षरदिति—ततोनन्तरं क्षरत्तुषारशीकराः क्षरन्तः स्रवन्तस्तुषारशीकरास्तुहिनजलकणा येभ्यस्तादृशाः एवं प्रबुद्ध उत्फुल्लः कैरवाकरः कुमुदसमूहो येभ्यस्तादृशाः शार्वरीकराश्चन्द्रसम्बन्धिनः। शर्वरीकरश्चन्द्रः तस्येदमित्यण् । कराः किरणा जगत्सु लोकेषु जजृम्भिरे विजृम्भिताः । “बलिहस्तांशवः कराः” इत्यमरः । जजृम्भिरे इति जृभि विनामे काशे चेत्यस्माल्लिटि ॥ ५३ ॥

वधूस्तदाऽनुनिन्यिरेनयेनयेनयेनयेनये ॥ व
शंनरोनयन्समुन्नतेनतेनतेनते ॥ ५४ ॥

वधूरिति—तदा चन्द्ररश्मिपातानन्तरं ये नरः ये पुरुषा येन येन नयेन यया यया नीत्या उपायेन वधूः कामिनीरनुनिन्यिरेऽनुनीतवन्तः ते पुरुषाः समुन्नतेन समृद्धेन तेन तेनोपायेन वशं स्वाधीनतां अनयन्नैषुः। येन येनोपायेन पादानत्या स्त्रियोऽवशा वशमागताः तेनैव वशं चक्रुरिति भावः ॥ ५४ ॥

सहासहावमादरैःसहासहाःस्मरस्यते॥ सुरा
ऽसुरायथाऽमृतेसुरासुरागमादधुः ॥ ५५ ॥

सहेति— स्मरस्य कामस्य असहा असहिष्णवस्ते कामुकजनाः सहासहावं हासहावादिभावसहितं यथा स्यादेवम् आदरैः सह सादरं सुरासु मधुषु रागं पानानुरागमादधुर्दधिरे । अनन्तरं कामुकजना हावादिसहितं सुरां पपुरिति भावः । यथा सुरासुरा देवासुरा अमृते रागं कुर्वन्ति । "सुराहलिप्रियाहालापरिस्रुद्वरुणात्मजा"इत्यमरः । आदधुरिति दधातेर्लिटि। यत्रोक्तं भरतेन।"अलङ्कारस्वभावज्ञैर्ज्ञेया भावा रसाश्रयाः । यौवनेऽभ्यधिकाः स्त्रीणां विकारावक्त्रगात्रजाः ॥ देहात्मकंभवेत्सत्त्वंसत्त्वाद्भावः समुत्थितः । भावात्समुत्थितोहावोहावाद्धेलासमुत्थिता।लीलाविलासोविच्छित्तिर्विभ्रमः किलकिञ्चितम्। मोट्टायितंकुट्टमितंविब्बोकललितं

तथा॥ विकृतंचेतिविज्ञेयादशस्त्रीणांस्वभावजाः ।
नुकृतिर्लीलाश्लिष्टावाग्वेषचेष्टितैः ॥
प्रियायावासनादिषु ।
दर्शनः । चित्तवृत्त्यनवस्थानंशृङ्गाराद्विभ्रमोमतः ।
ह्लादितगीतादिव्यामिश्रंकिलकिञ्चितम् ॥ मोट्टायितं
स्मृत्वासाङ्गभङ्गादिजृम्भणम् । दुःखोपचारः
षोत्कुट्टमितंमतम् । विद्वेषोभिमतप्राप्तावपिगर्वादनादरः
अनाचार्योपदिष्टंस्याल्ललितंरतिचेष्टितम् ।
व्याजाद्विकृतंदर्शितेङ्गितम् ॥ ५५ ॥

मधुप्रपीयचाभवन्नतानतानतानताः॥ रमा
ऽरमारमारमाजलेजनेऽत्रहालया॥ ५६ ॥

मध्विति—मधु प्रपीय मधु मद्यं प्रपीय पीत्वा
स्त्रियः नता नम्रा अनता अनम्राश्च नाभवन्नपि त्वभवन्
याया: पूर्वं नम्रास्तास्ता मधुपाने कृतेऽनम्रा अभवन्
अनम्रास्तास्ता मधुपाने कृते नम्रा अभवन् ।
मारः कन्दर्पस्तस्य मा लक्ष्मीः कन्दर्पशोभा तया
ऽत्र जने हालया सुरया।करणेन।रमा श्रीः अरं शीघ्रमेव
प्राप्तवती । सुरापानात् स्त्रीजनेऽन्यैव काचन
तात्पर्य्यम्।प्रपीयेति पीङ्पानेऽस्य रूपम्।पिबतेस्तु
ति भवितव्यम्।नल्यपीतीत्वनिषेधात्।अभवन्निति
ङि।आरेति

यद्वा पूर्वश्लोकोक्तास्ते कामिजनाः च पुनः मधु आसवं प्रपीय पीत्वा अतानतानतानताः अभवन्। अतानम् अक्षरशून्यं यत्तानं गानं मूर्च्छनाविशेषः तस्य भावस्तत्ता तस्यां आनताः परायणाः सुरां पीत्वा गानोत्सुका अभवन्नित्यर्थः। अत्र वसन्ते जने कामिजने अथवा अत्र जने अस्मिन् कामिजने हालया मदिरया आकुले मत्ते सति रमा शोभा मारं कामम् अरम् अत्यर्थम् आर प्राप। मदिरापानेन कामो विजृम्भित इत्यर्थः ॥ ५६ ॥

भ्रमरैर्द्रागस्तानिप्रपीयचमधूनिसानुरा
गस्तानि ॥ दत्तनिरागस्तानिप्रायच्छय
नञ्जनस्त्वरागस्तानि ॥ ५७ ॥

भ्रमरैरिति—सानुरागः सस्नेहः एवं त्वरागः त्वरया वेगेन गच्छतीति त्वरागः जनः कामुकलोको दत्तनिरागस्ता निरागस्तादत्ता निरपराधता यैस्तादृशानि विस्मारितापराधानि। भ्रमरैर्भृङ्गैश्चपकोपरिस्थितैर्द्राग्झटित्यस्तानि त्यक्तानि मधूनि मद्यानि प्रपीय पीत्वा शयनं पर्यङ्कं च प्रापत् अशिश्रियत्। कीदृशं शयनम्। तानि तानो विस्तारो वितानो वास्यास्तीति तानि सुरतार्थमिति भावः ॥ ५७ ॥

अदूरवस्थितैः प्रियैः सुदूरवस्त्रकाः कृताः ॥
तदूरवश्चकाशिरेमृदूरवः क्षतानखैः ॥५८॥

अदूरेति—अदूरवस्थितैरदूरे निकटेऽवस्थितैः प्रियैर्भर्तृ-

भिःसुदूरवस्त्रकाः कृताः सुदूरे वस्त्रं येषां तास्तादृशाः विहिताः । तदूरवस्तासां स्त्रीणामूरव ऊरुदेशाः मृदवः कोमलाश्च ते ऊरवो विपुलाः पीनाश्च विपुलाः नखैः क्षता भिन्नाश्चकाशिरे शुशुभिरे । प्रियकरहृतवसनाः कोमलाः स्त्रीणामूरवोरेजुरिति भावः वस्थितैरिति । "वष्टि भागुरिरल्लोपम्" इत्यादिनाऽल्लोपः बहुव्रीहित्वात्कः।"सक्थिक्लीबे पुमानूरुः।कोमलंमृदुलंमृदु वड्रोरुविपुलंपीनम्" इत्यमरः । चकाशिरे इति शावित्यस्य लिटि रूपम् ॥ ५८ ॥

ससमुद्रमहेलाभिस्फुरितगुणाभिस्ततः रमहेलाभिः ॥ श्रीःप्रवरमहेलाभिस्तथै वयुवपङ्क्तिभिः परमहेलाभिः ॥ ५९ ॥

ससेति–ततोनन्तरं

ससमुद्रा ससागरा महती दीर्घा या इला भूमिस्तस्यां स्फुरिताःश्रुता गुणा यासां ताभिः परमहेलाभिः परमा ष्टा हेला लीला यासां ताभिः प्रबलमहेलाभिः स्मरमहे कन्दर्पोत्सवे श्रीश्शोभा सुखं वा अलाभि प्राप्ता तथैव तेन प्रकारेण युवपङ्क्तिभिस्तरुणश्रेणिभिः श्रीः यद्वा ताभिः।करणेन।सह वा युवपङ्क्तिभिः शोभा । यत्रापि विशेषणम् । अलाभीति दुर्लभष् ... लुङि"चिण्भावकर्मणो" इति च्लेश्चिणि कृते "लभेश्च

नित्यं नुमि प्रसक्ते "विभाषा चिण्णमुलोः" इति नुमागमाऽभावे वृद्धौ रूपम्। महती इला महेला। "गोभूवाचस्त्विडा इलाः। महेला महिलापि च" इति द्विरूपकोषः ॥८९॥

विपरीतरतिं वर्णयन्नाह—

इहमणितारावलयश्रितइवनृत्येकृतावतारावलयः ॥ वक्षसितारावलयस्वनानिपेतुश्चहारतारावलयः ॥ ९० ॥

इहेति—मणितारावलयश्रिते मणिते सुरतकूजिते आरावः शब्दस्तस्य लयः साम्यं तेन श्रिते गीतवाद्यादिसाम्ययुक्ते इह रते नृत्य इव नाट्य इव वलयः त्रिवलीभङ्गाः कृतावताराः कृतोऽवतारोवतरणं याभिस्ताहश्योऽभवन् । उपरिसुरतेऽत्यासक्त्या वलयो नादृश्यन्तेति यावत् । वलयस्वनाः कङ्कणझणझणत्काराश्च तारा अत्युच्चा अभवन् । हारतारावलयः हारस्य ताराः शुद्धमौक्तिकानि तेषां श्रेणयश्च प्रियवक्षसि निपेतुश्चस्खलुरित्यर्थः। यद्वा हारेषु यस्तारावलिर्यष्टिविशेषः ते वक्षसि प्रियोरसि निपेतुः। रतिसम्भ्रमात् त्रुटितहारयष्टयः प्रियोरसि निपतिता इत्यर्थः। सप्तविंशतिमौक्तिका यष्टिस्तारावलिर्नक्षत्रमाला । "सैवनक्षत्रमालास्यात्सप्तविंशतिमौक्तिकैः"इत्यमरादित्यर्थः। नृत्येपि पात्राणामवतारणं तद्वारादित्रुटने कङ्कणक्वाणादि भवति। "लयः साम्यमथास्त्रियाम्। मणितं रतिकूजितम्। वलिः प्राण्यङ्गजे स्त्रियाम्"इत्यमरः।

अभवन्निति भवतेर्लङि । "तारोत्युच्चैस्त्रयस्त्रिषु । लयोऽस्त्रियाम् । मुक्ताशुद्धौचहारःस्यात्"। निपेतुरिति तेर्लिटि ॥ ६० ॥

तयार्द्रधीरमाययामुदामनारमाययया ॥
नलोविहारमाययावधःकृतारमायया ॥६१

तयेति—आर्द्रधीः शृङ्गारस्निग्धबुद्धिर्नलो मुदां अनारमायया आरमो विरतिस्तद्रहितः अनारमः अयः भावहविधिर्यस्यास्तादृश्या हर्षाविरतभाग्ययेत्यर्थः। यया मायारहितया तया दमयन्त्या सहितो नलो क्रीडामाययौ आगमत् । यद्वा या दमयन्ती मुदां अनारमाय अविश्रामाय भवति तया सह नलो यौ। यया रमा लक्ष्मीरधःकृता रूपेण सौभाग्येन तोऽप्यधिका तादृश्या दमयन्त्या नलो विजहारेति भावः आययाविति यातेर्लिटि ॥ ६१ ॥

साशङ्काऽमायाऽऽसीत्कृतिनीभैमीनलस्य
कामायाऽऽसीत् ॥ कामनिकामायासी
द्युतितदिष्टांसचाऽधिकामायासीत् ॥ ६२

साशङ्केति—सा भैमी अशङ्का शङ्कारहिता कृतिनी पुणा पुण्यवती वाऽमाया निर्व्याजा आसीदभूत्। प्रकारेण नलस्य कामाय अभिलाषाय काममपूरयदित्यर्थः । कामनिकामायासी कामेन

थेन निकाममत्यर्थमायासी आयासः परिश्रमो यस्य तादृक् स च नलश्च तादृशीं दमयन्तीप्सितामधिकां द्युतिं क्रीडाम् आयासीत् आगतः । दमयन्तीरतावसरे निर्व्याजा शङ्का नलस्याऽभिलाषाय बभूव। नलश्च दमयन्तीमनोऽभिलषितं समपूरयदिति परस्पररसोत्कर्षोऽभूदिति भावः। आसीदित्यस्तेरेकं लङि अपरमपि अस गतावित्यस्य लुङि। आयासीदिति यातेर्लुङि। यद्वा। भैमी कथंभूता साशङ्का सभया प्रौढरात्रित्वात् स्त्रीस्वभावत्वाच्च। पुनः अमाया निःकपटा। पुनः सीत्कृतिनीत्येकं विशेषणम्। आशङ्कासहिता या माया कापट्यं तया सीत्कृतिनी भयच्छलेन सीत्कारवती । यद्वा मायया छलेन सीत्कृतिनी नलस्य कामाय मनोरथसिद्ध्यै आसीत् बभूवेत्यर्थः ॥ ६२ ॥

इतिनानामायानांनलःकलिभुवांबलेनना
नामायानाम् ॥ व्यसनानामायानांनि
धिररमद्राज्यजन्मनामायानाम् ॥ ६३ ॥

इतीति—इत्यनेन प्रकारेण नलो नैषधः नानामायानां नानाविधा माया व्याजानि येषु तादृशानां कलिभुवां कलेर्भवन्तीति कलिभुवः कलिजनितास्तेषां व्यसनानां विपदाम् आयानादागमनपर्यन्तम् आगमनावधेः अरमत् अक्रीडत्। कथंभूतः बलेन। करणेन। राज्यजन्मनां राज्ये जनपदे जन्म येषां तादृशानामायानां धनागमनानां निधिर्निधानमाधार

इति यावत्। अभवदिति पाठे नानादम्भकलिजनितापत्त्या ममनावधि नलो राज्यश्रीभाजनमभूदिति भावः । "अयः शुभावहो विधिः" इत्यमरः। अभवदिति भवतेर्लङि॥६३॥

स्वयंवरादनन्तरंमहीमहीमहीनधीः ॥
ररक्षनैषधस्तदारराजराजराजराः ॥ ६४ ॥

इतिश्रीकालिदासकृतेनलोदये सत्काव्ये द्वितीयोच्छ्वासः ॥ २ ॥　इति पूर्वार्द्धः ।

स्वयमिति—तदा तस्मिन्काले नैषधो नलः स्वयंवरादनन्तरं स्वयंवरात्परतः महीं भुवं ररक्षाऽपालयत् । कीदृशः मही सोत्सवः पुनः अहीनधीः विशालबुद्धिः राजराजराः राजराजः कुबेरस्तस्येव रा धनं यस्य तादृशः सन् रराज शुशुभे । स्वयंवरोत्तरं भुवमरक्षन्नलः कुबेरप्रायसम्पन्नासीदिति भावः । "राजराजो धनाधिपः । अर्थ रै विभवा अपि" इत्यमरः । रराजेति राजतेर्लिटि ॥ ६४ ॥

इति श्रीनलोदयकाव्यटीकायां सुबोधिन्यां द्वितीयोच्छ्वासः ॥ २ ॥ इति पूर्वार्द्धः ॥

---

## अथोत्तरार्द्धे-

## तृतीयोच्छ्वासः ।

अथसुरवृपभाःस्वरतःप्रेक्ष्यकलिंप्रस्थिता
महाद्भास्वरतः ॥ यःकृतिपुशुभास्वरतः
पप्रच्छुस्तद्गतिघननिभाःस्वरतः ॥ १ ॥

अथेति–अथ स्वयंवरादनन्तरम् अतोऽस्माद्भास्वरतो देदीप्यमानान्महात्स्वयंवरोत्सवात्स्वः स्वर्गंप्रस्थिताः प्रचलिताः। सुरवृषभाः सुरोत्तमा इन्द्राद्याः कलिं प्रेक्ष्य तद्गतिं तस्य कलेर्गतिं गमनं पप्रच्छुः। यः कलिः शुभासु कृतिषु कार्येषु अरतः न रतः विरक्त इति यावत्। कीदृशाः सुरोत्तमाः स्वरतः कण्ठध्वनेः घननिभाः घनो मेघस्तत्सन्निभाः कलिविशेषणं वा। दमयन्तीस्वयंवरात्स्वर्गं गच्छन्तो देवा मध्ये कलिं दृष्ट्वा कुत्र गच्छसीति तद्गमनं पृष्टवन्त इति भावः। "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः। मह उद्धव उत्सवः" इत्यमरः। पप्रच्छुरिति प्रच्छधातोर्लिटि ॥ १ ॥

देवैर्गमनं पृष्टः कलिराह–

यशसामाऽऽयामितयाहृतःश्रियाभीमदु
हितृमायामितया ॥ तदधिगमायाऽमि
तयास्पृहयाऽद्यमनुष्यमाऽऽयामितया ॥२॥

यशसामिति–यशसाम् आयामितया कीर्तीनां दैर्घ्यवत्तया अतियशस्विन्या। इन्नन्तात् तल्। भीमदुहितृमायां भीमस्य राज्ञो दुहिता पुत्री दमयन्ती तन्मायां तद्व्याजम् इतया गतया तया श्रिया लक्ष्म्या हृत आहृतचित्तः। तदधिगमाय दमयन्तीरूपलक्ष्मीलब्धयेऽमितयाऽसंख्यया बहुतरया स्पृहया इच्छयाऽद्यास्मिन् वर्त्तमानदिने मनुष्यलोकमायामि गच्छामि। "आत्मजस्तनयः

सूनुःसुतःपुत्रःस्त्रियां त्वमी । आहुर्दुहितरं सर्वे" इत्यमरः । आयामोति यातेर्लटि ॥ २ ॥

इतिविकलोऽमायायास्तदुक्तऊचेजनोऽ
मलोमायायाः॥शुभशीलोमायायाः स्थि
तोनलोऽस्यावरोऽनुलोमायायाः ॥ ३ ॥

इतीति–इत्यनेन प्रकारेण तदुक्तस्तेन कलिनोक्तो भाषितः अमलो निर्मलः अमरो वा रलयोरैक्यात् जनो देवलोक ऊचेऽकथयत् । किमकथयदित्याह । अमायाया निर्व्याजायाः अस्याः दमयन्त्याः शुभशील उत्तमस्वभावो नलः वरः स्थितः। वरः प्रसिद्धः । कीदृश्याः विकलोमायायाः विकलो दीनः उमायाः पार्वत्या अयः शुभावहो विधिर्यया तादृश्याः पार्वत्युत्तमभाग्यायाःकीदृश्याः अनुलोमायायाः अनुलोभः अनुकूलः अयः शुभाऽदृष्टं यस्यास्तस्याः मा यायाः मागच्छ। दमयन्त्या नलो वृतस्त्वं मा गच्छेति भावः । यद्वा मायाया दम्भतः बुद्धितो वा विकलस्सन् त्वं मागच्छेत्यर्थः। यद्वा देवलोकविशेषणम् । "माया शाम्बरी कृपा दम्भोबुद्धिश्च" इति हैमः ॥ ३ ॥

वचइतिवस्वादिभ्यःश्रुत्वाकलिरुत्सवास
वस्वादिभ्यः॥ मखसर्वस्वादिभ्यश्चुकोप
दोषात्समदभुवःस्वादिभ्यः ॥ ४ ॥

वच इति– स कलिरुत्सवासवस्वादिभ्यः उत्सवलक्षणो

स्त्रीत्वेन नले यानुरक्तेत्यर्थः।अबलाया भावोऽबलता।"त्वतलोर्गुणवचनस्य"इति पुंवद्भावः।यथा लता सुरवृक्षान् अबलतया असारत्वेन संयोज्य नले तुच्छतृणे वल्यते पश्चात्तेन सह तया क्षणमपि न स्थीयते तथेत्यर्थः।लतया कथंभूतया मानवलतया माने विस्तारे वलता अतिशयो यस्यास्तयेति भावः । "अमा सह समीपे च"इत्यमरः । आस्यतामित्यास उपवेशन इत्यस्य भावे लोटि ॥ ५ ॥

इतिबलवानन्तरतः कलिः किलैतज्जगाद
वानंतरतः ॥ अवहितवानन्तरतस्समृद्धि
षुनलस्यविविशिवानन्तरतः ॥ ६ ॥

इतीति–इत्यनेन प्रकारेण बलवान्कलिरेतत् पूर्वोक्तं शापवचनं जगाद।किल निश्चये।अंतः अनन्तरम् अन्तरतः छिद्रतः छिद्रम् अवकाशं वा प्राप्य। ल्यब्लोपे पञ्चमी।यद्वा अन्तरतः अन्तर्द्धानात् समृद्धिषु सम्पत्सु सत्सु । तद्वृद्धिष्विति पाठे पूर्वोक्तशापवचनवृद्धिषु इत्यर्थः । अवहितवान् सावधानः वानं वनसमूहं तरतो गच्छतो नलस्याऽन्तः हृदयं विविशिवान् प्रविवेश । यद्वा अन्तरतद्वृद्धिषु इति पाठे अवकाशशापदुःखबाहुल्येषु अवहितवान् सावधानः। यद्वाऽन्तरं विनाशं तनोतीत्यन्तरतत्ताहृशा वृद्धयः नलस्य ऋद्धयो धनागमास्तेषु । यद्वाऽन्तरतद्वृद्धिषु अन्तरं छिद्रं तद्वृद्धिषु छिद्रबाहुल्येषु सावधानः। अथवान्तरतद्वृद्धिषु अ-

न्तरे मध्ये तद्वृद्धिषु तस्य नलस्य वृद्धिषु धनागमेषु अवहितवान्। यथा वृद्धिर्न भवतीति। पुनरन्तरतः नाशरतः एवं पूर्वोक्तं शापवचनं कलिरुक्तवान्। प्रवेशच्छिद्रान्वेषणसावधानश्च मृगयां गतस्य नलस्य हृदयमध्यास्तेति भावः। "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि च। अन्तोऽध्यवसितौमृत्यौस्वरूपेनिश्चयेन्तिके"। वानमिति "तस्य समूहः" इत्यण्। विश प्रवेशन इत्यस्माल्लिटि क्वसौ कृते "विभाषागमहनविदविशाम्" इति वसोरिड्विकल्पः॥ ६॥

सोऽथसदारोदरतःपुष्करविजितोनलःस दारोदरतः॥ व्याजाद्दारोदरतःस्वपुरा न्निर्यातवानुदारोदरतः॥ ७॥

सोथेति—अथ कलिप्रवेशानन्तरं दारोदरतः द्यूतसम्बन्धिनो व्याजात्कपटात्पुष्करेण भ्रात्रा विजितः पराजितः स नलः दरतः भयात् पीडया वा उदारोदरतः उदारं विशालमुदरं मध्यं यस्य तादृशात्स्वपुरात् स्वगृहान्नगराद्वा सदारः दाराः दमयन्ती तया सहितो निर्यातवान् निरगमत्। यद्वा राज्यभ्रंशानन्तरं कलिसंक्रमणात् नलस्य जलोदरं जातमिति पुराणवार्त्ता। बृहदुदरहेतोरित्यर्थः। कीदृशः सदा सर्वदा रोदे अश्रुक्षरणे रतोनुरक्तः। रुदन्निति यावत्। "दरोदरदुरोदरे" इति वैजयन्ती। "तस्येदम्" इत्यण्। "पञ्च-

म्यास्तसिल्" अगारे नगरे पुरः । "दरोऽस्त्रियां भये श्वभ्रे । उदारो दातृमहतोः" इत्यमरः ॥ ७ ॥

असमानानाऽऽहाऽरिःस्मैनंशब्दांश्चकिम
मुनानाहारि ॥ अपितेनाऽनाहारिभ्रान्तं
भूषणमपास्यनानाहारि ॥ ८ ॥

असेति–अरिः शत्रुः पुष्करो रिपुरेव वा एनं नलम् असमानाननुचितांश्च शब्दान् वाणीराह स्म ।.भर्त्सनवचनान्यशिश्रवदित्यर्थः । अमुना नलेन किं वस्तु नाऽहारि न हारितम् । यद्वा अमुना पुष्करेण अस्य नलस्य सम्बन्धि- किं वस्तु नाऽहारि। अपि तु सर्वमेव हृतमित्यर्थः । तेन नलेन हारि मनोज्ञं नाना बहुविधं भूषणमलङ्कारं हारकुण्डलकेयूरादिकमपास्य त्यक्त्वा अनाहारि आहारस्याऽभावोऽनाहरः सोऽस्यास्तीत्यस्मिन्निति तादृशमाहाररहितं यथा स्यादेवं भ्रान्तं वनेषु भ्रमितम् । द्यूते पुष्करविजितो नलो भूषणमपास्य वने बभ्रामेति भावः । अहारीति हृञो लुङि चिणि ॥ ८ ॥

शुचमकरोदन्यस्यभ्रमन्नलःपथिपदंसरो
दंन्यस्य.॥ नचपुनरोदन्यस्यत्राणायाया
भूतपरंपरोदन्यस्य ॥ ९ ॥

शुचमिति– पथि मार्गे संरोदं रोदनं रोदस्तेन सहितं

साश्रु ।यद्वा स नलः रुदन् रोदनं कुर्वन् पदं चरणं विन्यस्य क्षिप्त्वा भ्रमन्नटन् अन्यस्य प्रेक्षकस्य पुष्करस्य वा शुचं शोककमरोदकार्षीत् । च पुनः अस्य नलस्य परोदन्यस्य परा उदन्या पिपासा यस्य तादृशस्य ओदन्यस्य ओदनार्हस्य परमन्यदन्नजलादिना त्राणाय रक्षणाय नाभून्नाभवत् । नलः कण्टकवति मार्गे कोमलचरणतया रुदन् परिभ्रमन्सर्वेषां शोकमकरोत्।क्षुत्तृपितस्यास्य रक्षणाय कोपि नाभून्निराहार एवासीदित्यर्थः। "मन्युशोकौ तु शुक्स्त्रियाम् । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुपु"।उदन्य इति"तदर्हति" इति यः। "अशनायाबुभुक्षाक्षुद्ग्रासस्तुकवलार्थकः। उदन्या तु पिपासा तृट्"इत्यमरः। अभूदितिभुवोलुङि॥९॥

नाऽस्यरमानाऽऽवासस्तच्चखगाजह्रुरर्थ्य
मानावासः॥ अपिमदमानाऽऽवासस्वरो
पजलधितरन्क्षमानावासः॥ १० ॥

नास्येति–अस्य नलस्य न रमा लक्ष्मीर्न आवासो गृहमाच्छादनं वा । आसीदित्यध्याहारः। तच्च वासः तस्य वस्त्रम् अर्थ्यमानाः क्रीडार्थमाहरेति दमयन्त्या याच्यमाना खगाः कलिमायाविर्भूता हंसा जह्रुः । दमयन्तीपरिहितवस्त्रैकदेशं परिधाय हंसजिघृक्षया स्ववस्त्रं तदुपरि क्षि तद्वस्त्रं गृहीत्वा हंसा ययुरिति पुराणवार्त्ता । स नलः क्षमा नावा शान्तिर्नौकया स्वरोपजलधिं स्वक्रोधसमुद्रं तर

उल्लङ्घयन्मदं गर्वं मानमभिमानं च आस चिक्षेप । लक्ष्मीः स्थलं वास्य नासीत्कुत्रापि न स्थितवानित्यर्थः । पथि च तद्वासो गृहीत्वा पक्षिणो गताः । असौ च गर्वाभिमानाव-त्याक्षीत् । आसेत्यसु क्षेपण इत्यस्य लिटि ॥ १० ॥

तापशतेनवसानौद्रवेदितीमौनगावृतेऽन
वसानौ ॥ चेलान्तेनवसानौचेरतुरेकेन
पर्वतेनवसानौ ॥ ११ ॥

तापेति–इमौ दमयन्तीनलौ तापशतेन तापाधिक्येन नौ आवयोर्वसा मेदो द्रवेत् शुष्येदिति हेतोरेकेन चेलान्तेन वसनखण्डेन वसानौ छादयन्तौ अनवसानौ न अवसानं मृत्युर्ययोस्तादृशौ नवसानौ नवं नूतनं सानु शृङ्गं यस्य तादृशे पर्वते नगैर्वृक्षैरावृते युते चेरतुश्चलितवन्तौ । अति-घर्म्मे एकेन पटान्तेनाऽऽच्छादयन्तौ इमौ मरणरहितौ पर्वते चलिताविति भावः । नगावृते इत्यत्र सुखादृते इति पाठे सुखं विनापि अविनाशिनौ इत्यर्थः । "हृन्मेदस्तु वपा वसा" । "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ" इति नौ इत्यादेशः । द्रवेदिति द्रु गतावित्यस्य लिङि । "शैल-वृक्षौ नगावगौ । स्नुःप्रस्थः सानुरस्त्रियाम्" इत्यमरः । चेर-तुरिति चरतेर्लिटि ॥ ११ ॥

तद्वासःस्वापायान्नीतिरियंचेतिविपदिस
स्वापायाम् ॥ निजवासःस्वापायान्निकृ

त्यतामसुञ्चदिहसस्वापायायाम् ॥ १२ ॥

तद्वास इति—स नलः कलिच्छन्नबुद्धित्वात् विपदि विपत्तौ इयमेव नीतिर्मत्वा तां दमयन्तीं स्वापायां स्वापम् आयातीति स्वापाया तादृशीं सुप्तां सस्वापायां स्वस्यापायो विश्लेषस्तत्सहितां पुनः स्वापायां स्वस्मात् अपगतः शुभावहविधिर्यस्यास्तां दुरदृष्टामित्यर्थः। तां दमयन्तीमिह वने निजवासस्वापायात् निजं स्वकीयं यद्वासः स्वं च धनं तदपायात्तदपगमात्तद्वासः तस्या दमयन्त्या वासो वसनं निकृत्याऽऽच्छिद्याऽमुञ्चत् अत्याक्षीत्। यद्वा विपादि किंभूतायां स्वापायां स्वेन आत्मना आप्यते प्राप्यते स्वापा तस्यां सत्यां सस्वापायां स्वापयुक्तायां दमयन्त्यां सत्याम् इत्यर्थः। नलो वने प्रसुप्तां दमयन्तीं वसनार्द्धं छित्त्वाऽमुञ्चदिति भावः। अमुञ्चदिति पाठे लुङि लृदित्त्वादङ् ॥ १२ ॥

बभ्रामाऽनस्तेनश्रमेणकलिनाविधूयमा
नस्तेन ॥ सहिरिपुमानस्तेनःस्वभाग्य
दोपाङ्कसमहिमानस्तेन ॥ १३ ॥

बभ्रामेति—रिपुमानस्तेनः शत्रुगर्वापहारी स नलः श्रमेण प्रयासेनानस्तेन नाऽस्तंगतेन सता अत्यन्तपरिश्रमेण दुःखात् तेन कलिना विधूयमानः कम्पितस्सन्। अथवा कलिना अनस्तेनासक्तेन श्रमेण यस्य श्रमस्य दुःखस्य

कलिः प्रयोक्ता तेन परिश्रमेण दह्यमानः सन् बभ्राम पर्यटितवान् । हि यस्मात्कारणात्ते स्वभाग्यदोषाः स्वपूर्वार्जितदुष्कृतादिकर्म्मदोषाः क्व कस्मिन्समहिमानः समहत्त्वाः न अपि तु सर्वत्रैव पूर्वकर्म्मप्रधानम् । यतोऽयमीदृगवनीशोऽप्येकाकी गतराज्यभारो वने पर्यभ्रमीत् ॥ १३ ॥

मृगकुलमाऽऽरसदाविश्रममभितापातुरो
ममारसदाविः ॥ स्फुरिततमारसदावि
स्तृतानगायत्रविपिनऽऽमारसदावि ॥ १४ ॥

मृगेति—स नलो दावि दावो वनवह्निस्तत्संयुक्तं प्रज्वलद्दावं विपिनं वनमार जगाम । यत्र यस्मिन् विपिने मृगकुलं मृगगणम् आविश्रमम् आसमन्ततः अविश्रमं विश्रान्तिरहितम् आविर्भूतश्रमं वा यथा स्यादेवम् आरसत् आर्त्तशब्दं कुर्वत् जलाभावात्तृषाकुलं ममार । विः पक्षी अभितापातुरोऽभिसमन्ततो यस्तापस्सन्तापस्तेन आतुरः क्लान्तस्सदा सर्वदा ममार मृतवान् । सदावीति निर्विसर्गपाठे विपिनं किंभूतम् अवि न विद्यन्ते वयः पक्षिणो यत्र तादृशम् अभितापातुर इति नलविशेषणम् इत्यर्थः।विस्तृता विस्तीर्णशाखाः रसदाः रसो भयानकरसस्तं ददातीति तादृशः निर्य्यासदाः वा । स्फुरिततमाः प्रकाशिततमा नगा वृक्षाः स्फुटिततमा इति पाठे विदीर्णाः विस्तृताः भूमौ आस्तीर्णाः रसदाः निर्य्यासदाः । दवाग्निना दह्यमानत्वात् । सत्र-

न्दा या नलो दवानलाकुलं वनं गतवान् यत्र भयप्रदविस्तीर्णशाखाः वृक्षाः। यस्मिन्नतिगह्वनतरुदर्शनेन भयं भवतीति यावत्। यत्र चला अलसा मृगा इतस्ततो धावन्तः कृताक्रन्दाः सन्तो मृताः। पक्षिणश्च मृताः तादृशं विपिनं मरुदेशं गतवानिति भावः ॥ १४ ॥

शोकभरोदस्तेनश्रुतःसचनलाद्रवेतिरो
दस्तेन॥ द्रुतिमकरोदस्तेनस्वयमित्यूचे
भयंपुरोऽदस्तेन ॥ १५ ॥

शोकेति— तेन नलेन शोकभरोदस्तेन शोकातिशयेन उदस्तेन व्याकुलेन उत् ऊर्ध्वम् अस्तेन क्षिप्तेन शरीरादुत्क्रान्तजीवेन हे नल आद्रवागच्छेति रोदः रोदनं श्रुतः आकर्णितः तेन कारणेन स च नलः द्रुतिं वेगमकरोत्। च पुनः हे अस्तेन अस्तः इनः प्रभुर्यस्य हे अनाथ अदः इदं ते तव भयं न इति पुरोऽग्रे स्वयम् ऊचे उक्तवान्। स्वकमिति पाठे स्वकं स्वकीयम् आत्मसम्बन्धि भयं तव नास्तीत्यर्थः।शोकभरविक्षिप्तचेतसा नलेन नलागच्छेति कर्कोटकनागरोदनं श्रुतम्।स वेगेन तत्र गत्वा ते इदं भयं न भविष्यतीत्यवोचदिति भावः। अस्तेन इति सविसर्गपाठे अस्तेनः अस्तः कान्त्या तिरस्कृत इनः सूर्यो येनेति नलविशेषणम्। द्रुगताविति अस्य लोटि मध्यमे। ऊचे ब्रुवो लिटि। "स्यात्पुरः पुरतोऽग्रतः।भीतिर्भीःसाध्वसं भयम्" इत्यमरः ॥ १५ ॥

क्वभवान्छंसत्वऽस्यत्वाऽऽपदमित्याश्रयो
नृशंसत्वस्य ॥ तंदेशंसत्वस्यप्रापनलःस
त्वरोभृशंसत्वस्य ॥ १६ ॥

क्वेति—स तु नलो भृशमत्यर्थं सत्वरः त्वरायुक्तः सन् अस्य सत्वस्य प्राणिनस्तं देशं प्राप गतवान् । भवान् क्वास्तीति शंसतु आपदम् अस्यतु त्यजतु इति निगद्येति यावत् । कीदृशो नलः । अनृशंसत्वस्य अक्रौर्यस्य कारुणिकत्वस्याश्रयो निवासः।रोदनश्रवणानन्तरं नलो गत्वा भवान् क्वास्ति कथयतु आपदं विपत्तिं जहातु इति निगद्य दवाग्निमविशदिति भावः । शंसतु शंसु स्तुतावित्यस्यानेकार्थत्वाद्वदनमात्रार्थः । अस्यत्विति असु क्षेपणे इत्यस्य लोटि। "विपत्त्यां विपदापदौ । नृशंसो घातुकःक्रूरः" प्रापेत्यापे लिटि । "सत्वमस्त्री तु जन्तुषु" इत्यमरः ॥ १६ ॥

अथपवनाशमयंतंक्वापिदवाग्नौददर्शनाश
मयन्तम् ॥ स्वबलेनाऽशमयन्तंरुजमजि
घृक्षच्चपुनरनाशमयन्तम् ॥ १७ ॥

अथेति—अथ समीपगमनानन्तरमयं नलः तं पवनाशं पवनं वातमश्नातीति पवनाशस्तादृशं तं सर्पं कर्कोटकं क्वापि दवाग्नौ कस्मिन्नपि दवदहने अयन्तं गच्छन्तम् इतस्ततः विनाशं मृतिमयन्तं गच्छन्तं विनश्यन्तं ददर्शाद्राक्षीत्।कीदृशं स्वबलेन स्वप्रभावेण रुजं पीडामशमयन्त-

न्तमपरिहरन्तम् । पुनः अनाशं आशा जीविताशा तद्रहितम् अनाशम् । न मृतं मुमूर्षुं वा । अजिघृक्षत् पुनः ग्रहीतुमैच्छत् । नलो दवदहनदह्यमानं कर्कोटकमपश्यद्ग्रहीतुं चैषीत् । जिह्मगःपवनाशनः । "ग्रहउपादाने" अस्य "सनिग्रहगुहोश्च" इतीट्निषेधाद्द्वित्वेकृते लुङि रूपम् ॥ १७ ॥

सचधृतनागस्तेनस्वविषेणविरूपितोम
नागस्तेन ॥ सहितोनागस्तेनप्रोक्तश्चा
ऽऽत्मास्तुवेदनागस्तेन ॥ १८ ॥

सचेति—स च नलः धृतनागो धृतसर्पः मनागस्तेन मनाक् ईषत् अस्तेन क्षिप्तेन तेन कर्कोटकेन स्वविषेण विरूपितः विरूपोऽसुन्दरः कुब्जः कृतः।अनागस्तेन आगस्तनोतीत्यागस्तो न आगस्तो अनागस्तस्तादृशेन निरपराधिना नलः।किंभूतः सहितः हितं प्राणरक्षणलक्षणं तेन सहितः कृतात्मरक्षः उक्तश्च । किमित्याह हेनल ते आत्मा वेदनागः पीडाभाक् न अस्तु न भवतु तव मत्प्रसादाद्विषवेदना मा भूत् यद्वा यतः स नागः हितः तेन हेतुना उक्त इत्यर्थः । नलः सर्पमुत्क्षिप्तस्तेन दष्टो विरूपोभवत्तेनैव च तव विषपीडा न भविष्यतीत्यभिहितश्चेतिभावः । अत्र कथोपकथनमनुसन्धेयम् । यथा कर्कोटकनामा नागोऽहं नारदशापाच्चलितुमशक्तः पश्चात्समुनिरेवमाह यदा नलो राजा त्वामितो नष्येति तावत्त्वमचलो भूत्वाऽत्र तिष्ठ अतस्त्वं मामितो न

यस्व अहं तवोपकारोपायमपि उपदेक्ष्यामि इत्युक्त्वा समुष्टि-प्रमाणोऽभूत्। नलस्तं वनाग्नेरन्यत्र निनाय ततस्त्यक्तुकामं नलं पुनरुवाच पदानिगणयन् गच्छ ततः श्रेयः करिष्यामि। ततो नलेन एकादिक्रमेण गणयित्वा दशेत्युक्तेआज्ञाच्छलेन नागस्तमदशयत्। ततो नलो विरूपो बभूव। नागस्त्वाह जनास्त्वां न जानन्त्विति रूपमन्तर्द्धापितं। यत्कृते त्वं दुःखी जातः स कलिर्ममविषेणान्तर्दग्धस्त्वांत्यक्ष्यति। अयोध्यां गच्छ बाहुकनामा सारथिरहमिति ब्रुवन् ऋतुपर्णनृपसमीपे स्थीयताम्। सतेऽश्वविजयविद्यां दत्त्वाऽश्वविद्यां नेष्यति। ततस्तव कल्याणं भविष्यति। मत्स्मरणार्थं वासोयुगं गृहाण। यदा इदं वासः परिधास्यसि तदा निजरूपं प्राप्स्यसि इत्युक्त्वा नागो गत इति महाभारतवार्त्ता। "नुत्तनुन्नास्त निष्ठ्यूताविद्धक्षिप्तेरिताः समाः"। "किंचिदीषन्मनागल्पे"। "यातनातीव्रवेदना। पीडाबाधाव्यथादुःखं"। अनागस्तेने तितनोते "अन्येभ्योपि दृश्यते" इति डप्रत्यये रूपम्। अस्तु अस्तेर्लोटि ॥ १८ ॥

कर्कोटको नलमाह–

स्यात्तरसाकल्यंतेवपुरमुनात्तेनवाससा कल्यन्ते ॥ येयशसाकल्यन्तेगुणोदये दधतिभूतिसाकल्यन्ते ॥ १९ ॥

स्यादिति–हेनल अमुना आत्तेन गृहीतेन वाससा वस्त्रयुगलेन ते तव वपुः शरीरं कल्यन्ते कलिपीडापगमे तरसा

वेगेन कल्यं निरामयं स्यात् भविष्यति । ये जनाः यशसा कीर्त्या कल्यन्ते श्रीयन्ते ते गुणोदयैः गुणानामुदयैरधिगमैः भूतिःसम्पत्तिः तस्साकल्यंपूर्णत्वं दधति धारयन्ति । ये यशस्विनस्ते गुणोदयवशाल्लक्ष्म्या श्रीयन्तएवेति अतः खेदं माकुर्विंतिभावः । आत्तेनेत्यत्र अन्तेनेति पाठे अध्यवसितेन ईप्सितेनेति यावत् । यशसा इत्यस्य विशेषणम् । यद्वा निश्चयेन कल्यं स्यादित्यर्थः । यद्वा हेअन्तेनेति सम्बोधनं अन्ते अन्तकाले इन प्रभो हे इत्यर्थः । "वार्त्तो निरामयः कल्यः" "अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके" "कलमदे" अस्यानेकार्थत्वाच्छ्रयणमर्थः । तस्मात्कर्मणिलिटिरूपम् । "समग्रं सकलं पूर्णम्" ॥ १९ ॥

अपिचविनामानेनश्रयणीयः सतुपर्णना मानेन ॥ स्वाङ्गेनाऽमाऽनेनस्स्युर्विपदोन हिनृणांक्वनामाऽनेन ॥ २० ॥

अपीति–स एवाह हेअनेनः निष्पाप नल हे इन प्रभो मानेनाऽभिमानेन विनाऽपि च ऋतुपर्णनामा ऋतुपर्णाख्यो स्वाङ्गेन स्वशरीरेण अमा सह श्रयणीयो न । अपि तु श्रयणीय एव ।तत्र मानं न कार्यमिति भावः। यद्वा ऋतुपर्णनामा इनः प्रभुः श्रयणीय इति नेत्यर्थः । हि यतः नृणां प्राणिनां क्व नाम कुत्र नाम विपदो न, विपत्तयो न, अपि तु प्राणिनो विपदा परिभूयन्त एव। अनेनेतिनिर्विसर्गपाठे न

विद्यते इनः यस्य यस्माद्वा स अनेनःचक्रवर्त्तित्वात् तस्य सम्बोधने हेअनेन । तथा च सार्वभौमत्वाभिमानं न कार्यमिति भावः । त्वयाऽनेन कुब्जशरीरेण समयप्रतीक्षया ऋतुपर्ण आश्रयणीयः । प्राणिनां विपद्भवत्येवेति समाश्वासयदिति भावः । "कलुषंवृजिनैनोघमंहोदुरितदुष्कृतम्" । "नामप्राकाश्यसंभाव्यक्रोधोपक्रमकुत्सने । गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि ॥ २० ॥

व्रजसुखमायाहीनश्रीरित्यन्तर्हितः शमायाहीनः ॥ स्निग्धोमायाहीनःस्याज्जनतायाः क्वनोत्तमायाहीनः ॥ २१ ॥

व्रजेति—हेनल कथं भूतः इनश्रीः इनस्य सूर्यस्य श्रीरिव श्रीर्यस्य सूर्य्यकान्तिःअथवा इनश्रीरिति सर्पविशेषणं।युक्तश्चैतत् नलस्य विशेषणं तदानीं विरूपत्वात् । व्रज गच्छ । उद्दिष्टमृतुपर्णसमीपमिति यावत् । किमर्थं शमाय शान्त्यै सुखं आयाहि आप्नुहीत्युक्त्वाऽहीनः सर्प्पराजोऽन्तर्हितः । एनमेवार्थमुपोद्घातयति ॥ हि यतः उत्तमाया जनताया उत्कृष्टस्य जनसमूहस्य मायाहीनो निर्दंभः इनः समर्थः स्निग्धो मित्रं क्व कुत्र न स्यात् । अपितु सर्वत्रैव स्यात् । कर्कोटको नलं व्रज सुखञ्च लभस्वेत्युक्त्वान्तर्दधे सज्जनं सुहृन्मिलत्येवेतिभावः । "वयस्यःस्निग्धोसवयाः" । "इनःपत्यौनृपार्कयोः" इतिमेदिनी । स्यादस्तेर्विधिर्लिङ् जनतेति "ग्रामजनबन्धुसहायेभ्यस्तल्" ॥ २१ ॥

प्रीतिवशादनवनतः कृत्वातद्वसनमात्म
सादनवनतः ॥ बहुमांसादनवनतः सोऽ
स्मादृतुपर्णमाससादनवनतः ॥ २२ ॥

प्रीतीति—अर्थात् स नलः।प्रीतिवशात् अनवनतः न नवनं स्तुतिःअनवनं तस्मात् ।आद्यादित्वात्तसिः। तथा च प्रीतिवशादेव तद्वस्त्रं गृहीतं न तु स्तवं कृत्वेत्यर्थः। तद्वसनं वस्त्रं आत्मसात्कृत्वा गृहीत्वा- अस्माद्वनतः अरण्यात् ऋतुपर्णं नाऽऽससाद।अपि तु आससादेव। काक्वर्थे नञ्। किंभूतात्। न अवनं रक्षणं यस्मिंस्तस्माद्रक्षाहीनाद्बहुमांसादनवनतः बहुतरा ये मांसादना व्यालाः सिंहशार्दूलराक्षसास्तेषां वनतः वन्यते संभज्यतेऽस्मिन्निति वनं तादृशाद्बहुक्रव्यादसंभक्तात् समूहात्॥" वस्त्रमाच्छादनंवासश्चेलंवसनमंशुकम्"॥ "तदधीनवचने" इति सातिः। वनपणसंभक्तावित्यस्य वनतइति। आससादेतिसदेर्लिटि ॥ २२ ॥

अकृतमुदायन्तारंतममनुतसोऽध्वनोयदा
ऽयन्तारम् ॥ ध्वनिसमुदायन्तारंदधतोऽ
स्यहयाश्चतन्तदाऽऽयन्ताऽरम् ॥ २३ ॥

अकृतेति—स ऋतुपर्णः तं नलं मुदा हर्षेण यन्तारं सारथिमकृत। सोयं नलो यदाऽध्वनो मार्गस्य तारं तारणं अमनुत मेने अङ्गीकृतवान्। तदा तस्मिन्काले तारमत्युच्चं ध्वनिसमुदायं ह्रेषासमूहंदधतः कुर्वतोऽस्य ऋतुपर्णस्य

हया अश्वा अरम् अतिशीघ्रमायन्त आजग्मुः । यदा ऋतुपर्णाल्लब्धसारथ्यो नलो मार्गे त्वां यथेष्टं तारं यामीत्यङ्गीकृतवांस्तदा ह्रेषमाणा ऋतुपर्णवाजिनोऽतिशीघ्रं चेलुरित्यर्थः।"नियन्ताप्राजिता यन्ता सूतः क्षत्ताचसारथिः । तारोत्युच्चैस्त्रयस्त्रिषु" इत्यमरः । अयगतौ वित्यस्यात्मनेपदिन आयन्त ॥ २३ ॥

अथसहसादमयन्त्यासादमयन्त्याऽऽत्मशर्मनिद्रामुमुचे ॥ जीवितसादमयन्त्यासा दमयन्त्यागमकृतसचयदातस्याः ॥ २४ ॥

अथेति—अथ नलापगमानन्तरमात्मशर्म स्वसुखं दमयन्त्या उपतापयन्त्या दमयन्त्या भैम्या सा निद्रा शयनं सहसा शीघ्रं मुमुचे त्यक्ता । कीदृश्या जीवितसादं जीवितस्य सादमवसादं विनाशं अयन्त्या गच्छंत्या प्राणान् जहत्येतियावत् । स च नलः सादमयं दुःखमयं त्यागं परित्यागं तस्याः दमयन्त्याः यदा यस्मिन्काले अकृत कृतवान् । नलेऽपयाते वनप्रदेशसुप्तया दमयन्त्या निद्रा मुक्ता।कदा अयं नलः दुःखप्रचुरंतत्त्यागं यदाऽकार्षीत्।दमु उपतापे अस्माण्णिचिशतरि स्त्रीत्वेटापि दमयन्त्येति रूपम् । साद्यतेऽवसाद्यतेऽनेनेति सादो दुःखम्।त्यजहानावित्ये तद्धात्वर्थत्वेन कण्ठोक्त एवार्थः ।.अकृतेति कृञो लुङि । जीवितसादामित्यत्र धीहिंसादमिति पाठे धीहिंसा बुद्धि-

नाशस्तं ददातीतिसः। तं नलं अयन्त्या चिन्तयन्त्या नलः क्कगतः अहं वा क्क गच्छामि कुत्र तं पश्यामीति भावयन्त्या। अथधातोर्गत्यर्थकत्वात् ज्ञानार्थकत्वमित्यर्थः ॥ २४ ॥

साऽत्रससादारामासीतेवत्रासमाससादा
ऽरामा ॥ याप्रासादारामानुपेत्यभर्त्रारतिं
रसादाऽऽराऽमा ॥ २५ ॥

सेति–अत्र भयङ्करे वने सा रामा दमयन्ती ससादा सदुःखा त्रासं भयं आससाद प्राप्तवती। केव अरामा रामरहिता सीतेव या दमयन्ती पूर्वप्रासादारामान् प्रासादान् नृपगृहान् आरामान् उपवनानि उपेत्य आगत्य रसात् स्नेहात् भर्त्रा नलेन अमा सह रतिं क्रीडां आर प्राप। "प्रासादोदेवभूभुजाम्" "आरामः स्यादुपवनम्" "सुन्दरी रमणीरामा" "अमासहसमीपेच" इत्यमरः ॥ २५ ॥

तत्रपदेव्यालीनामथविभ्रान्तंवनेचदेव्या
ऽलीनाम् ॥ तरुवृन्देव्यालीनांततिंदधा
नेतयाऽऽस्पदेव्यालीनाम् ॥ २६ ॥

तत्रेति–अथाऽनन्तरं तत्र तस्मिन्नरण्ये तया देव्या दमयन्त्या च पुनः विभ्रान्तं विविधं भ्रमितं पर्यटितं नलमन्वेषयन्त्येति शेषः। कीदृशे वने व्यालीनां सर्पिणीनां पदे स्थाने पुनस्तरुवृन्दे व्यालीनां छन्नामासक्तामलीनां भृङ्गा-

णां तर्ति समूहं दधाने धारयति । पुनः व्यालीनां पक्षिणस्तेषामालीनाम्पङ्क्तीनामास्पदे प्रतिष्ठास्थले । " लीसख्यावली अपि" "षट्पदभ्रमरालयः" ... कायाम् । विश्रान्तमिति "उदितो वा" ... "प्रतिष्ठास्थानमास्पदम्" ॥ २६ ॥

वेगबलापासितयावेण्याभैमीयुताललापा
ऽसितया ॥ नृपसकलापासितयाहत्वारी
न्बान्धवान्किलाऽऽपासितया ॥ २७ ॥

वेगेति—वेगबलेन धावनबलेन अपासितया विस्तृतया अपगता आसिता उपवेशनत्वं अथवा असिता विद्यमानता यस्याः सा तया त्रुटितया असितया श्यामलया वेण्या युता सहिता भैमी दमयन्ती ललाप विललाप । किंविललापेत्याह । हेनृप हेराजन् तया सकलापासितया कलापस्तूणीरः असिः खड्गः ताभ्यां सहितः सकलापासिः तस्य भावस्तत्ता तया करणेन यद्वा वेगबलापासितया वेगंच बलंच आप्नोतीति वेगबलापः सचासिर्यस्य स वेगबलापासिः तस्य भावस्तत्ता तया दृढखड्गवत्त्वेन । कथंभूताय सकलापासितया सकलानामर्थात् शत्रूणां अपासितया अपहृतखड्गतया अरीन् हत्वा बान्धवान् बन्धूनापासि रक्षसि । किलेतिवार्त्तायाम् । त्वयि खड्गधारिणि सति अन्येषां हस्तात् खड्गाः स्वयं पतन्तीति भावः । स त्वमेकाकिनीं मां

वने त्यक्ता कथं गतोसि पुनर्नायासीति भावः । "वार्त्तासम्भाव्ययोः किल" । "कलापोभूषणेवर्हेतूणीरेसंहतेपिच" । आपासीति पारक्षणे इत्यस्य लटि ॥ २७ ॥

प्रेमकरुणादिकमनुस्मरन्ती आह—

सकथंमानवनानान्यायविदाचरसिसेव्य मानवनानाम् ॥ धृतसीमानवनानान्दारा णांत्यागमनुपमाऽनवनानाम् ॥ २८ ॥

सेति—हे मानवनानान्यायवित् मनुः प्रजापतिस्तत्प्रणीतो यो नाना बहुप्रकारो न्यायो धर्मशास्त्रं तद्वेत्तीति तादृक् । यद्वा मानवा मनुष्यास्तेषां नानान्यायो व्यवहारस्तंवेत्तीति ज्ञातसकलधर्म्मशास्त्र मानुषव्यवहाराभिज्ञ हे अनुपम निरुपम स त्वम् अनवनानाम् अवनं रक्षणं तद्रहितानां सेव्यमानवनानां सेव्यमानमाश्रीयमाणं वनमरण्यं यैस्तादृशानां वनमध्यगतानां धृतसीमानवनानां धृतं सीमायाः कुलमर्यादायाः नवनस्तवो यैस्तादृशानां दाराणां स्त्रियाः त्यागं परित्यागं कथमाचरसि करोषि । अदुष्टभार्यात्यागे दोषं कथं न विचारयसीति भावः । स कथंमानवनानामिति सानुस्वारपाठे हेऽन्यायवित् एतस्मिन्कर्मणि धर्मोऽधर्मोवेति विचारपण्डितहे किंभूतानां दाराणां मानवनानां मानानां वनं गहनं येषांतेषां मानगहनानामित्यर्थः । "दाराः पुंभूम्नि" ॥ २८ ॥

परकृतमेतत्त्वेनः स्मरामियन्नस्मृतोऽसिमे तत्त्वेन ॥ दोषसमेतत्त्वेनप्रदूषयेनाऽत्रस म्भ्रमेतत्त्वेन ॥ २९ ॥

परेति—हेइन स्वामिन् नल यत् यस्मात् एतन्मत्परित्याग-रूपमेनः पापं परकृतं परणे कलिना कृतं स्मरामि जानामि। तु पुनः त्वं मे मया तत्तस्मात् तत्त्वेन सत्स्वरूपत्वेन याथार्थ्येन न स्मृतोसि न ज्ञातोसि । आपितु तत्त्वतो ज्ञा-तोसि । त्वं स्वबुद्ध्या एवं नाऽऽचरासि । अत्र सम्भ्रमे दुःखे दोषसमेतत्वेन सदूषणत्वेन त्वा त्वं वा न प्रदूषये न दूषयामि। कलिकृते अपराधे त्वां कथं दूपयामि । त्वं सर्वदा दूषण रहित इति भावः। नभ्रूकाकर्थे ।"समौसंवेगसम्भ्रमौ" दूषय-इति "दोषोणे" इत्यूत्वे रूपम् ॥ २९ ॥

दमयन्त्यात्मानं प्रत्याह—

हृदयौकायस्तेनस्थीयेतयथैवपावकाय स्तेन ॥ यावत्कायस्तेनत्यज्येतस्वहृदि चाऽधिकायस्तेन ॥ ३० ॥

हृदेति—हे स्व आत्मन् यावत् यत्कालपर्य्यन्तं ते त्वया कायः न त्यज्येत न मुच्येत तावत् यस्ते तव हृदयौका हृदयमोक आश्रयो यस्य स हृदयवासी नलः । तेन नलेन हृदि हृदये अधिकायस्तेन अधिकमायस्तेन । व्याकुलेन न स्थीयतए । अपि तु स्थीयतएव । किमिव

यथैव पावकायः पावकेऽग्नौ अयो लोहमिव दहनगतलोह-
मिव। हेआत्मन् यावत्त्वमिमं कायं न जहासि तावद्विरहान-
लप्रदीपे मद्धृदि नलः स्थास्यति। यथाग्नौ लोहः। एवं तस्य
मत्प्रियस्य दुःखं भवतीति त्वं शीघ्रं कायं जहीहीति भावः।
"स्वो ज्ञातावात्मनि"। स्थीयेतेति "घुमास्थागापाजहा-
तिसां हलि" इतिदीर्घः। "पिण्डंकालायसायसी"। आयस्ते-
ति आङ्पूर्वकयसुप्रयत्ने इति धातोः क्तः ॥ ३० ॥

यस्यपदेशंकमितः स्वजनोऽयंप्राप्यजन
पदेशंकमितः॥ अरिवृन्देशङ्कमितस्मित
सत्वमुपगतोऽसिदेशंकमितः॥ ३१ ॥

यस्येति—अयं स्वजनो बन्धुवर्गः यस्य पदे तव राज्ये यं
त्वां जनपदेशं राष्ट्राधिपं प्राप्याधिगम्य शं कल्याणं कं सुखं
इतः प्राप्तवान्। हेकमितः कान्त अरिवृन्दे शत्रुसमूहे अश-
ङ्कं शङ्कारहितं मितस्मित मितपरिहास स त्वं इतो वनात्कं
देशं कां भुवं उपगतोसि गतवानसि। आदौ यं स्वपदे-
शमिति पाठे स्वपदेशं सुष्ठु शोभनमपदिश्यत इत्यपदेशो
नाम तादृशं शोभनाख्यं यं जनपदेशं प्राप्य स्वजनः कं सु-
खं अयं शुभावहविधिमितः प्राप्तः। यद्वा स्वपदे स्वस्थाने
स्थानान्तरं कथंभूतम्। अशम् अकल्याणम् इत्यर्थः। दमय-
न्ती विलपन्तीदमाह—हेनल यं त्वां राज्याधिपंप्राप्याऽऽ
त्मीयलोकः सुखं प्राप्तवान् स मां दुःखजलधौ मज्जन्ती-

सुपेक्ष्य अस्माद्वनात्कं देशं गतवान् ।
णस्थानलक्ष्मांघ्रिवस्तुषु" । शं सुखे ।
स्य के । "बन्धुस्वस्वजनाः समाः"
स्वंत्रिष्वात्मीये स्वोऽस्त्रियांधने" । स्वपद इति
सप्तमी ॥ ३१ ॥

यद्यशसाऽनुरुरोदःकुहरंयोद्वेष्टुरंजसानुरु
रोदः ॥ अद्रेः सानुरुरोऽदःकिमापदयितो
ममेतिसाऽनुरुरोद ॥ ३२ ॥

यदिति—हेरुरो हेचित्रमृग यद्यशसा यस्य कीर्त्त्या रोदः कुहरं द्यावाभूम्यन्तरं एकोक्त्या रोदःशब्दः सान्तः स्वर्गभूमिवाची । तयोः कुहरं विविरम् अनुरु अविपुलम् अल्पं कृतम् । तत्र न मातीति भावः । यश्च द्वेष्टुः द्वेषं कुर्वतो नुः पुरुषस्य अञ्जसा झटिति उरोदः उरो वक्षो द्यति खण्डयतीति तादृक् द्विषद्वक्षोविदारकशरवर्षीत्यर्थः । स मम दयितोवल्लभो नलोऽदोद्रेः सानु गिरेः समभूभागं किम् आप प्राप्तवान् इत्युक्तासाऽनुरुरोद पश्चादरोदीत् । वने दमयन्ती मृगं पृच्छति वनेचरन् क्षीणः । द्यावाभूमी पूरिते यश्च द्विषद्वन दावानलः किं गिरिसानुं प्राप्तवानित्युक्ता रुरोद । "वड्रोरुविपुलम्" "द्यावाभूमीचरोदसी" "पुरुषाः पूरुषानरः" "स्नुः प्रस्थः याम्" इत्यमरः । उरोद इति उरो द्यतीति "दो अवखण्डने"

इतिधातोः "आतोऽनुपसर्गेकः" इति कः "कृष्णसाररुरुन्यं कुरंकुशंवररोहिषाः" इत्यमरः। आपेत्यापोलिटि। "पश्चात्साहश्ययोरनु" इत्यमरः। रुरोदेति "रुदिरू अश्रुविमोचन" इत्यस्य लिटि ॥ ३२ ॥

दमयन्त्यशोकमुपगम्याऽऽह—

श्रयकलनामानन्तेत्ययंजनोददतिचाऽङ्ग
नामानंते ॥ हार्देनामाऽनन्तेजनमेनमशो
ककुरुसनामानंते ॥ ३३ ॥

श्रयेति—हे अशोक! अशोक वृक्ष अयं जनो मल्लक्षण आनन्त प्रणमतीति कलनां बुद्धिं पूजां वा श्रय आश्रय गृहाण। अङ्गनाः स्त्रियश्च ते तव मानं पूजां दोहदं वा ददति ददते। स्त्रीसंस्पर्शात् तव पुष्पोत्पत्तिरिति भावः। नामेति सम्भावनायाम्। अतो अनन्ते बहुतरे हार्दे प्रेमणि सति एनं जनं ते तव सनामानं स्वनामाख्यमशोकं शोकरहितं कुरु। हृदः कर्म हार्दम्। "हायनान्तयुवादिभ्योऽण्"इत्यण्। हे अशोक त्वां नौमि मामपि शोकरहितं कुर्विति भावः ॥ ३३ ॥

उच्चशिरोदारावालप्येतिपनेसुबन्धुरोदा
रावा ॥ द्रुतिमकरोदाराऽऽरूक्षंमस्तल
मथोसरोदारावा ॥ ३४ ॥

उच्चेति—सुबन्धुरा अत्यन्तसुन्दरी उदारावा उदारा आवा गतिर्यस्यास्तादृशी दमयन्ती।उच्चशिरोदारौ उच्चशिरसो दारवो देवदारुद्रुमा यस्मिंस्तादृशे वने इति पूर्वोक्तमालप्याऽऽभाष्य विलप्य वा द्रुतिं वेगमकरोत् गतिं वा । यद्वा उच्चशिरा उच्चग्रीवा उदारा वा उत् ऊर्ध्वं आरावः शब्दो यस्याः सा उच्चशिरा उच्चैः विलप्यति यावत् । यद्वा एवार्थं वाशब्दः । उदारा दक्षिणा । "उदारोदातृमहतोर्दक्षिणेप्यभिधेयवत्" इति मेदिनीकारः । अस्ति चाऽदन्तोपि शिरशब्दः । "पिण्डं दद्याद्गयाशिरे" इतिदर्शनादित्यर्थः । अथो वेगकरणानन्तरं सरोदारावा रोदनशब्दसहिता रुदन्ती रुक्षं शुष्कं अवाः जलहीनं न विद्यते वाः जलं यस्मिन् तादृशं मरुतलं मरुदेशम् आर गतवती । क्वचिदतिसुन्दरे वने विलप्य दमयन्ती निर्जलं मरुदेशङ्गतवती रोदितीति भावः । दारुशब्दस्य वृक्षे वृक्षत्वप्रवृत्तिनिमित्तत्त्वाद्भाषितपुंस्कत्वेन "तृतीयादिषु भाषितपुंस्कंपुंवद्गालवस्य" इति पुंवद्भावत् घेरत्वादि। "भद्रदारुद्रुकिलिमं पीतदारुचदारुच" इत्यमरः। वासमुच्चयएवार्थे"इतिहैमः। ऋगतावित्यस्यारेतिच ॥३४॥

मृगकुलमारव्याधिप्रचुरंविभ्रद्वनंसमा
रव्याधि ॥ वीथ्यामारव्याऽधिष्ठितभुज
गंभीमजेयमारव्याधि ॥ ३५ ॥

मृगेति—इयं भीमजा दमयन्ती मारव्या मरोरियं मारवी तया वीथ्या मार्गेण समारव्याधि मारस्य कामस्य व्याधिः मारव्याधिः तत्सहितम् आरवि सशब्दम् । यद्वा आरवि आराः इतस्ततो जङ्गमा वयः पक्षिणो यत्र तत् । आधि प्रचुरं मानसीव्यथाबहुलं मृगकुलं विभ्रद्धारयद्वनम् आर गतवती । कीदृशं वनम् । व्याधि व्याधो लुब्धकस्तत्सहितम् अधिष्ठितभुजगम् अधिष्ठिताः भुजगाः सर्पा यस्मिन् तत् । समारव्याधिरिति सविसर्गपाठे दमयन्ती विशेषणम्। "पुंस्याधिर्मानसीव्यथा । स्त्रीरुग्रुजाचोपतापरोगव्याधिगदामयाः" इत्यमरः । आरेति ऋगतावित्यस्य लिटि । "वीथ्यालिरावलिः पङ्क्तिः श्रेणीलेखास्तुराजयः"इत्यमरः । "वीथीपदव्यपि" इत्यमरः ॥ ३५ ॥

सास्रवनासारासावेगमनाभीमनन्दनासा
रासा॥सुनयननासाऽऽराऽसावजगरमग्रा
सिचाऽमुनासारासा ॥ ३६ ॥

सास्रेति—सास्रवनासारा अस्रवनम् अश्रुजलं तस्याऽऽसारो वेगवर्षणं तत्सहिता सावेगमना आवेग उद्वेगः तत्सहितं मनो यस्यास्तादृशी सारासा आरासो रोदनरवस्तत्सहिता । यद्वा असारासा असारः अस्थिरः आस उपवेशनं स्थितिर्वा यस्याः सा भावे घञ् । असौ भीमनन्दना दमयन्तीअजगरं सर्पम् आर प्राप्तवती । अमुना चाऽजगरेण

सारा श्रेष्ठा सा दमयन्ती अग्रासि ग्रस्ता । कीदृशी । सुनयननासा नयनं च नासा च नयननासं शोभनं नयननासं यस्याः सा तादृशी सुनेत्रनासिकेति यावत् । मरुतलमाटन्ती दमयन्ती अजगरमद्राक्षीत्तेन चाऽजगरेण सुमुखीकवलिते इति भावः । "वनं सलिलकानने" "आसारो वेगवर्षणम्" ।नन्दिग्रहिपचादिभ्योल्युणिन्यच" इतिल्यौ नन्दनेति । "द्वंद्वश्च प्राणितूर्य्यसेनाङ्गानाम्" इति नयननासमित्येकवद्भावः । आरेति ऋगतावित्यस्य लिटि । "अजगरे शयुर्वाहसइत्युभौ" इत्यमरः। "ग्रसुग्लसुअदने"लुङिचिणि वृद्धौ अग्रासीति । "अश्रुनेत्राम्बु रोदनं चास्रमश्रुच" "सारोवलेस्थिरांशेच"। न्याय्येक्लीबंवरेत्रिषु"इत्यमरः॥३६

अथशवरोहास्यंतंस्वामूंस्तदमूंश्चरिपुतरो
हास्यन्तम् ॥ समधिरुरोहाऽस्यन्तंन्य
स्यतदास्येऽकरोत्खरोहास्यन्तम् ॥ ३७ ॥

अथेति–अथाजगरग्रसनानन्तरं रिपुतरोहा रिपूणां तरो बलं हन्तीति रिपुतरोहा शत्रुबलघातकः शवरः किरातः स्वासून् स्वप्राणान् हास्यन्तं जिहासतं तदमूंश्च तस्या दमयन्त्या असुन्प्राणान् स्यन्तं विनाशयन्तमजगरं समधिरुरोहाऽऽरूढवान् । तं हास्यं हासयोग्यमकरोदकार्षीत् । किं कृत्वा तदास्ये तस्याऽजगरस्याऽऽस्ये मुखे अस्यन्तं खड्गाग्रं न्यस्य निक्षिप्य । शवरः किंभूतः खर-

स्तीक्ष्णस्वभावः शबरो दमयन्तीप्राणान्विनाशयन्तं मार-यिष्यन्तं तमजगरं खड्गाग्रभिन्नमुखममारयदित्यर्थः । रिपु-तरोहेति"ब्रह्मभ्रूणवृत्रेषु क्विप्"इति सूत्रेण ब्रह्मादिष्वेव हन्तेः प्रयोगाच्चिन्त्यमिदम् । यद्वा । शबरः कथं भूतः रिपुतरः हा इति कृत्वा ।"हाविषादेचशोकेचकुत्सादुःखार्थयोरपि" इतिमेदिनी।हास्यन्तमिति ओहाक्त्यागे ऽतः "लटः सद्वा" इति शत्रा ।"पुंसि भूम्न्यसवः प्राणाः" । "तरसीबलरंहसी" इति चामरः । षेन्तकर्म्मणीत्यस्यस्यन्तमिति । समधिरुरो-हेतिलिटि । हास्यमिति । "तदर्हति" इतियः ॥ ३७ ॥

तांपुनरेकामयतःकृशांकिरातस्स्मरातिरे कामयतः ॥ कान्तारेऽकामयतस्त्रियंनका ङ्क्षदुपह्वरेकामयतः ॥ ३८ ॥

तामिति—तां दमयन्तीमेकामेकाकिनीं सहायरहितां अयतः शुभदैवात्कृशां तनुं दैववशात् दुर्बलामित्यर्थः । स्मरातिरेकामयतः स्मरस्य कन्दर्पस्याऽतिरेक आ-धिक्यं स एवामयो व्याधिस्तस्मात्कन्दर्पाधिक्यव्याधेर्हेतोः किरातः कान्तारे महावने अकामयत अचीकमत् । स्त्रीत्वेनेतिशेषः । त्वं मम भार्य्या भवेति कामना मकरोदि-ति भावः । अत्र हेतुमाह—कामयतः कामेनयतः संयतः कामातुरः उपह्वरे रहसि स्त्रियं नाऽकांक्षेन्नेच्छेत्किं । नभ्-

काक्कर्थः । अपितु कांक्षेदेव । "उपह्वरं रहसिसन्निधौ" इति हेमचन्द्रः ॥ ३८ ॥

धृतवनमह्यन्तेनत्राताऽसिमयाननुत्वमह्य
न्तेन ॥ मानिनिमह्यंतेनप्रसीदशरणाग
ताः क्कमह्यन्तेन ॥ ३९ ॥

धृतेति—शबरो भैमीमाह । ननु भोमानिनि दमयन्ति धृतवनमह्यन्तेन धृतः श्रितो वनमह्यन्तो वनभूमिप्रान्तं येन तादृशेन अह्यन्तेन सर्पनाशकेन मया त्वं त्राताऽसि रक्षितासि तेन हेतुना मह्यं प्रसीद प्रसन्ना भव । शरणायाऽऽत्मत्राणाय आगताः प्राप्ता जनाः क्क कुत्र न मह्यन्ते न पूज्यंते हेदमयन्ति अजगरं विनाश्य मया रक्षितासि । अथ शरणागताय मे प्रसीद । मह्यन्त इति महपूजायामित्यस्य कर्म्मणि लटि । "शरणं गृहरक्षित्रोः" इत्यमरः । "नन्वाक्षेपे परि प्रश्ने प्रत्युक्ता-ववधारणे । वाक्यारम्भे प्यनुनयामन्त्रणानुज्ञयोरपि" इति हैमः । "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेपि" इति हैमः ॥ ३९ ॥

सुमुखनिशापेतेनःस्मरदासानितिप्रोच्य
वसापेतेन ॥ दत्तेशापेतेनस्थितयाऽसा
न्त्वेनचलदृशापेतेन ॥ ४० ॥

सुमुखेति—हेसुमुखनिशापे सुशोभनं मुखं सुमुखं तदेव

निशापः चन्द्र इव यस्याः सा सुमुखनिशापा तस्याः सम्बोधने हे शोभनमुखचन्द्रे ते तव नोऽस्मान्दासान् स्मर जानीहि इत्यनेन प्रकारेण प्रोच्य उक्त्वाऽसान्त्वेन क्रोधेन स्थितया चलदृशा चञ्चलाक्ष्या शापे दत्ते वसाऽपेतेन वसा मेदस्तयाऽपेतेन हीनेन सता मदनज्वलनदह्यमानमेदसा तेन शबरेण किन्नपेते। अपि तु मूर्छितमेव। नञ्काक्वर्थः। क्रुद्धया दमयन्त्या शापे दत्ते शबरो मूर्च्छितोऽभूदिति भावः। सुमुखिविशापेतेनेति पाठे हेशोभनमुखि ते तव नः अस्मान् दासान् स्मरेति विशापे शापाभावे शापपूर्वमित्यर्थः। प्रोच्य तेन न पतितमिति काकुः। "हन्मेदस्तुवपावसा" इत्यमरः। "सामसान्त्वमुभेसमे" इत्यपि। पेतेइतिपततेः कर्म्मणि लिटि॥ ४०॥

दग्धसरागाहितयादमयन्त्याविपिनभूः
पराऽगाहितया॥ उच्चतरागाहितया
दृष्ट्याघोराचकन्दरागाहितया॥ ४१॥

दग्धेति—दग्धसरागाहितया दग्धः सरागः सकामोऽहितः शत्रुः शबरो यया सा तादृश्या तया दमयन्त्याऽपराऽन्या विपिनभूर्वनभूमिरगाहि अवगाहिता। उच्चतरागाहितया उच्चतरा ये अगा वृक्षास्तेष्वाहितया आरोपितया दृष्ट्या च घोरा भयावहा कन्दरा दरी अगाहि। कन्दरागाहितयेत्येकम्पदं वा। कन्दरायुक्ताद्रौ आहितया क्षिप्तयेत्यर्थः।

अत्र पक्षे घोरेति भूविशेषणम् । यद्वा परागाहितया पुष्पधूलिव्याप्तया दृष्ट्या वनभूः अगाहि विलोडितेत्यर्थः । दग्धशवरया तया भैम्या अन्याऽटवी अवगाहिता कन्दरा चादर्शि इति भावः । "गाह अवगाहने" अस्माल्लुङि चिणि ॥ ४१ ॥

पदवाऽपदवापदवापदवारयतोऽद्रिवनंवि
ललापचसा ॥ तरसाऽन्तरसान्तरसान्तर
सान्वयदुःखवृणीष्वसखेमरणम् ॥ ४२ ॥

पदवेति—अयतः शुभदैवात् पदवा पदाभ्यां वातीति पदवा सा दमयन्ती अपदवापत् अपगता दवापत् दवाग्निजन्य दुःखं यस्मात्तत् तादृशमद्रिवनम्पर्वतवनमवापत् लेभे । रयतो वेगादवापदितिवा । कीदृशं अवाः न विद्यते वार्जलं यस्मिन् तत् जलरहितम् । विललाप च पर्यदेवीच्च । हेसान्तरसान्तर सान्तं अन्तसंहितं रसान्तरं करुणातिरिक्तं रसो यस्मात्तादृश । हे सान्वयदुःख अन्वयः सन्तानस्तत्सहितंदुःखं यस्मिस्तादृश सान्तरदुःख इतिपाठे अन्तःकरणदुःखसहित हेअन्तर आत्मन् सखे मित्र तरसा वेगेन मरणं वृणीष्व वरय । पदचारिणी दमयन्ती दवविपद्रहितं जलशून्यं गिरिवनंगता विलापं चाकार्षीत् । हे आत्मन्स परिवारदुःखाकुल मरणमिदानीं वरय सांप्रतं किम् । यत्सखे, मम मरणमेव वरमितिभावः । अवापदिति आपेर्लेदित्वा-

दङ् "लपव्यक्तायां वाचि" इत्यस्य लिटि ललापेति। "अन्तरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये ॥ छिद्रात्मीयविनाबहिरवसरमध्यंतरात्मनिच" इत्यमरः ॥ ४२ ॥

वने गच्छन्ती कन्दरातो निःसृतं व्यात्तमुखं वृकं दृष्ट्वाह—

वृककोपपुरःसरमासरमासरमासरमाभ
वताननुसा ॥ किमृतेदयितादयतोदय
तोदयतोदयतोऽस्तिममेहसुखम् ॥ ४३ ॥

वृकेति—हेवृक तरक्षो कोपपुरस्सरं क्रोधपूर्वकं मा माम् आसर आगच्छ मां भक्षयेत्यर्थः। मा सर इतो मागच्छ। ननु भोः सा तव स्त्री वृकी भवता त्वया सरमा सलक्ष्मीका भवतु। तथा च मां भक्ष्य स्वस्त्रिया सह स्थीयतामिति भावः। यद्वा सा सरमा श्वापदत्वात् शुनी तव स्त्री त्वया सरमा भवत्विति शेषः। अतो मा सर अन्यत्र मां गम्यतांमामेव भक्षयेत्यर्थः। अयतोदयतोदयतः अयं शुभदैवं तस्य तोदः क्षेपस्तत्र यतो रत उदयोऽभ्युदयो वा यस्य तादृशाद्अदयतः निष्करुणाद्दयितात् स्वीयान्नलादृते तं विना इहाऽवसरे मम किं सुखमस्ति स्वास्थ्यमस्ति यत्तु हेअयतोद यतेतिभिन्नं पदम् अयो दैवं तेन या पीडा तया यतः बद्धः दैवपीडित उदयतः उद्गच्छतः। अपरन्तथैवेति ध्येयम्। यद्वा हेवृक कोपपुरः सरं मा सर स्वगृहात् मा गच्छ। आसर परावृत्त्य आगच्छ सा तव स्त्री सरमा सलक्ष्मी

का भवत्वित्यर्थः । तथा च क्रुद्धः सन् गृहात् मा गच्छेति-भावः । दमयन्ती वृकमाह हेवृक त्वं माम् आसर नलाहते मम किं सुखं जीवितेन वा किं प्रयोजनम् । अतो मां भक्षयित्वा स्वास्त्रिया सहैव स्थीयतां माविरही भवेति तात्पर्य्यार्थः । "तरक्षुस्तुमृगादनःवृकोपि" । आसरेति सर्त्तेर्लोटि । सरमाशुनी । "प्रश्नावधारणानुज्ञानुनयामंत्रणेननु" । "पृथग्विनान्तरेणर्त्तेहिरुङ्नाना च वर्जने" इत्यमरः ॥ ४३ ॥

अयिराक्षसभक्षयमांक्षुधितोनवसानवसा
नवसानवसाः॥ रुजमुज्झजनेऽत्रचहेकरु
णान्तरदान्तरदान्तरदान्तरदाम् ॥ ४४ ॥

अयीति—भैमी राक्षसं दृष्ट्वाऽऽह । अयि अहो राक्षस वसाः मेदांसि वसानाऽऽच्छादय अनवसान मरणहीन क्षुधितो बुभुक्षितस्त्वं न वस न तिष्ठ मां भक्षय । अत्र च जने मद्धक्षणे करुणान्तरदान्तरदान्तरद । करुणान्तरं करुणाप्रकाशस्तेन दान्तमुपशान्तं रदान्तरन्दन्तातरं ददातीति ताहक करुणाहीनरदनान्तरप्रदायकं रुजं पीडामुज्झ त्यज मयि पीडां त्यज अहमन्तः हृदयम् अदां दत्तवती । यद्वा करुणांतर सन्तर मद्विषये दयान्त्यजेत्यर्थः । हेदान्तरदान्तरद दान्तः समर्थः रदो दन्तः तस्यान्तरेण द्यति खण्डयति संबोधनम् । हेराक्षस मयि स्त्री　　रुजंत्यक्त्वा

मां भक्षय तुभ्यमहं शरीरं दत्तवतीत्यवोचदिति भावः। अदामिति ददातेर्लुङि। यदपि वहेः करुणांतरदान्तरदान्तर दान्तरद इतिपाठः। आन्तरं चित्तं द्यति खण्डयति तां रुजं त्यज। त्वमत्र जने करुणां वहेः हेरदान्तद दन्तान्तरप्रद दान्तं संसारंतर इति तदर्थः ॥ ४४ ॥

करमाकरमाकरमाऽकरमाऽकलयव्यस
नंममपाहिहरे ॥ दरतोदरतोदरतोदरतो
विरुतैर्मरुतांसुकरत्वमपि ॥ ४५ ॥

करमेति—हे रमाकर लक्ष्मीप्रद क ब्रह्मन् मम व्यसनं विपदं माकरम् मकराणामयं माकरस्तादृशमाकरं खनिम् आकलय मम शोकं समुद्रं जानीहि मरुतां देवानां सुकर अकृच्छ्रकर हेहरे हेकृष्ण नामोच्चारणेन हरति पातकानीति हरिः तस्य संबोधनम्। त्वमपि अदरतोदरतोदरतः अदरोऽनल्पो यस्तोदो दुःखं तत्र रतम् उदरमभ्यन्तरं यस्य तादृशात् दरतो भयात् विरुतैराश्वासनवचनैः पाहि रक्ष। यद्वा कं सुखं रमा लक्ष्मीस्तयोराकरः उत्पत्तिभूमिःस चासौ माकरः शोभाकरश्च तत्संबोधनम्। माकरं मकरसम्बन्धि समुद्रसदृशं मा लक्ष्मीस्तस्याः आकरः उत्पत्तिस्थानं समुद्रमिवेति वार्थः। हे ब्रह्मन् मम शोकः समुद्र इव प्रवृद्धः देव भयापहारिन् हेकृष्ण त्वमपीदृशे कष्टे मामाश्वास वाग्भिःरक्षेत्याहेति भावः। "मारुतेवेधसिब्रध्नेपुंसि-

कः "। "खनिःस्त्रियामाकरः स्यात्" इत्यमरः।एकत्रकरोती-त्याकरः । "ऋदोरप्" । "व्यसनंविपदिभ्रंशे दोषेकामजकोपजे"। पाहीति "पारक्षणे"अस्यलोटि।सुकरेति।"ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषु खल्" । "दरो स्त्रियां भये श्वभ्रे" एवं कस्य ब्रह्मणो । रमाकर लोकाधिपत्यकर हरे सुकर शोभनहस्त दरतोदरतो दरतः दरो भयं तस्य तोदो नाशस्तत्र रतमुदरं यस्य तस्य दरतः शङ्खस्य मरुतां वायूनां विरुतैर्मां पाहि रक्षेति ध्येयम् ॥ ४५ ॥

त्वदरिर्निषधेशसमृद्धिमनारमयारमयार
मयारमयाः ॥ व्यसनंत्वमुपैमिकदानुस
भीशमनाशमनाशमनाशमनाः ॥ ४६ ॥

त्वदरिरिति–हेनिषधेश नल त्वदरिः पुष्करः अनारमया अनवसानया रमया लक्ष्म्या रमया वा समृद्धिं हर्षमाऽऽर प्राप्तवान् । त्वं मया सह अरं शीघ्रं व्यसनं विपत्तिम् अयाः गतवानसि अनाशमनाः आशेच्छा तद्रहितं मनो यस्या-स्तादृशी । यद्वा त्वदरिः कथंभूतः अनाशमनाः न विद्य-ते नाशे विनाशे मनो यस्य स तथेत्यर्थः । सभीशमना भीर्भयं तच्छमनं शान्तिस्तत्सहिता शान्तभीतिः अनाशं नाशरहितं शं सुखं कदा उपैमि कस्मिन्काले उपगच्छा-मि । नु पृच्छायाम्।कदा सुखं लप्स्ये इति व्यलपत । याते-

लेङि अयाः । उपैमीतोणः । " विभाषाकदाकर्ह्योः " इति भविष्यति लट् । " नुपृच्छायांविकल्पेच " ॥ ४६ ॥

यमनायमनायमनायमनागभिवीक्ष्यरतं द्रवतीहपरः ॥ सरुषोनिषधक्षितिनाथगल न्नवमानवमानवमाऽनवमाः ॥ ४७ ॥

यमनेति–अनायमना अनीतिमना अनीतियुक्तः नय एव नायः । अन्यायपर इत्यर्थः । यद्वा आयो धनागमस्तद्रहितमनाः सन् परः शत्रुर्मनागीषत् यमनाय जीवापहरणाय रतमासक्तं यं त्वां वीक्ष्येह लोके द्रवति दूरादेव पलायते । हेनिषधक्षितिनाथ निषधेश नल गलन्नवमानवमान गलन् स्खलन् नवमानवास्तरुणास्तेषांमानो गर्वो यस्मिस्ताहक् स त्वम् । अनवमाः अवमाः अधमाः न अवमाः अनवमाः श्रेष्ठाः रुषः क्रोधान्वम उद्गिर हेनल यं त्वां कृतानीतिः शत्रुर्हन्तुमुद्यतमीषदप्यालक्ष्य पलायते स त्वं परहृतसर्वस्वः ता गिरः कथं नोद्गिरसि।वने वने किमटसीति भावः।"किञ्चिदीषन्मनागल्पे"इत्यमरः ।"द्रुगतौ" इत्यस्य लटि द्रवतीति । "रुट्क्रुधौस्त्रियौ" इत्यमरः । टुवमउद्गिरणे स्माल्लोटि उद्गिरेति "निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः"इत्यमरः ॥ ४७ ॥

नयमानयमानयमानयमावसएत्यनिवास

ममुंभवता ॥ भवनीयमपायमरीनुदया
न्नयतानयतानयतानयता ॥ ४८ ॥

नयमेति—नयमानयमान् नयो नीतिर्मानो ऽभिमानो यमो विश्रमो नियमो वा तान् अयमानः प्राप्नुवानः तस्य संबोधने हे नयमानयमानयमान नीतिमभिमानं नियमञ्च-धारयन् यं निवासं राष्ट्रमेत्य प्राप्य आवसः यस्मिन् राष्ट्रे ऽतिष्ठः अमुंनिवासं अयता प्राप्तवता उदयानुद्गतोऽयो ज्ञानं येषां तादृशान् अनयतानयतान् अनयोऽन्यायः तस्य तानो विस्तारस्तत्र यतान् अन्यायासक्तान् अरीन् शत्रू-नपायं नाशं नयता प्रापयता भवता त्वया भवनीयं भवितव्यम् । हेनल यन्निजराज्यं प्राप्य पूर्वमावस्थाः पुन स्तदेवराज्यं गच्छता त्वया शत्रून् विनाशयितुं समर्थेन भवितव्यमिति तदेव निजपुरं गच्छेति व्यलपदिति भावः । आवस इत्यस्याधारस्य निवासमित्यस्य "उपान्वध्याङ्-वसः" इति कर्म्मत्वम् ॥ ४८ ॥

सनयासनयासनयासनयाह्यसुहृद्धटया
विपदंस्वपदम् ॥ हितदेहितदेहितदेहित
देत्यलपद्धहुधानरदेवसुता ॥ ४९ ॥

सनयेति—हेहितद हितमीप्सितं वस्तु ददातीति हितद नल स त्वं सनयासनया नयो नीतिस्तस्या असनं त्याग-

स्तत्सहितया त्यक्तनीत्या असुहृद्घटया शत्रुकरिसमूहेन विपदं नाशं न याहि मागमः। ईहितदेहि ईहिता इष्टा उपकर्त्तारो देहिनो जना यस्मिं स्ताद्दशं तत्स्वपदं स्वनगरमेहि आयाहि । इत्यनेन प्रकारेण सनया नीतिसहिता नरदेव सुता भीमभूपपुत्री बहुधा बहुप्रकारम् अलपद्विललाप । यद्वा हितदेहितदेहीत्येकं पदम् हितदम् ईहितं चेष्टितं येषां ते ताद्दशदेहिनो यत्र तत्स्वपदं राज्यमेहि । हेनल एवमेकाकी शत्रुहस्ते मा गच्छेः । शत्रवः एकाकिनं त्वां दृष्ट्वाऽपकुर्युस्तस्मात्स्वकीयमेव नगरं गच्छेति नानाशंकाकुला भैमी तस्मिन् वने विललापेति भावः । करिणां घटना घटा । -या प्रापणेऽस्य लोटि याहीति । "पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः । एहीतीणोलोटि । अलपदिति लप व्यक्तायां वाचीत्यस्य लङि । बहुधा संख्याया विधार्थेधा । सप्तभिः कुलकम् ॥ ४९ ॥

सा विधुरा धावन्तं रत्नौघं क्वापि निरपराधाव
न्तम् ॥ सार्थं राधावन्तम्प्रैक्षिष्टापच्च सुतनु
राधावन्तम् ॥ ५० ॥

सेति—विधुरा विरहिता सुतनुः शोभनाङ्गी सा दमयन्ती निरपराधाऽपराधरहिता क्वापि कस्मिन्नपि देशे रत्नौघं रत्नसमूहम् अवन्तं रक्षन्तं सरत्नसमूहं राधावन्तं राधासमृद्धिस्तत्सहितं धावन्तं गच्छन्तं सार्थं जनसमूहं प्रैक्षिष्ट

दृष्टवती । आधौ मनःपीडायामन्तमवसानंच प्राप लेभे । वनेऽटंती सार्थमासाद्य मनःपीडांजहाविति भावः । धावु गतिशुद्ध्योरित्यस्य धावंतीति । राधसाधसंसिद्धावित्यस्य षिद्भिदादिभ्योऽङित्यङि राधेति । प्रैक्षिप्रेतीक्षदर्शनांकनयोरित्यस्य लङि आपेलुंङि आपदिति "संघसार्थौतुजंन्तुभिः" । पुंस्याधिर्मानसीव्यथा" इत्यमरः॥ ५० ॥

व्याकुलयेवाऽरितयाविधेर्गतिरनेनसिद्धये वारितया ॥ अपिचययेवारितयायथाश फर्य्याजलोच्चयेवारितया ॥ ५१ ॥

व्याकुलेति—विधेर्दैवस्याऽरितया शत्रुत्वेन व्याकुलया इव अत्रापि विधाता शत्रुरभूदिति उद्भ्रांतयेव तया दमयन्त्या सिद्धये नलान्वेषणरूपकार्यस्य भीमपुरप्राप्तये वा अनेन सार्थेन सह गतिर्गमनमवारि भेजे वृता वा। वारितया का त्वं कुत्र यासि इति निवारितयापि च यये गतम्। कया यथा वारितया वाः जलमितया प्राप्तया शफर्या जलोच्चये जलवृद्धौ यथा।जनोच्चय इति पाठे जनसंघे तया ययेत्यर्थः । अवारितयां इत्यकारप्रश्लेषे अनिषिद्धयेत्यर्थः । अवाः जलरहितं निर्जलमितया शफर्येव अहमपि भवत्सङ्गे समेष्यामीत्युक्त्वा निषिद्धयापि भैम्या गतमिति भावः । "भाग्यं स्त्री नियतिर्विधिः" इत्यमरः । वृङ्संभक्तावित्यस्य लुङि चिण्यवारीति । या प्रापणे इत्यस्य भावे

लिटियये। "वार्वारि सलिलं कमलं जलम्" इत्यमरः। अत्रेयं भारतवार्ता। तत्र वने गच्छन्तं वणिक्सार्थं सा ददर्श तांच दृष्ट्वा तेषां मध्ये कश्चित् शुचिनामा वणिक् का त्वं कस्यासि क यासि इत्याह ततस्तया भीतया स्ववृत्तांत कथितं कुत्रापि भवद्भिर्नलो दृष्ट इति पृष्टाः न वयं नलं विद्म इत्यूचुः। ततः क यास्यथ इत्युक्ताः सुबाहुनाम्न श्चेदिराजस्य देशे वाणिज्यार्थं यास्याम इत्यूचुः ततः तैः सार्द्धं सापि ययौ इति ॥ ५१ ॥

प्रतिपिद्धान्यायस्यप्रापिसुबाहोश्चराजधा
न्यायस्य ॥ बहुधनधान्यायस्यप्रबभुर्वृ
न्दानिबहुविधान्यायस्य ॥ ५२ ॥

प्रतीति—आयस्य पदगमनेन आयासं कृत्वा प्रतिपिद्धा न्यायस्य प्रतिपिद्धो निराकृतोऽन्यायोऽनीतिर्येन तादृशस्य सुबाहोः सुबाहुनाम्नो राज्ञः राजधानी नगरी प्रापि च प्राप्ता च। कीदृशी बहुधनधान्या बहुतरं धनधान्यं यस्यां सा यस्य सुबाहोः आयस्य धनागमस्य बहुविधानि नानाप्रकाराणि वृन्दानि समूहाः प्रबभुः रेजिरे। एवं सार्थेन सह व्रजन्त्या भैम्या आयासेन सुबाहुपुरी प्राप्तेति भावः। प्रापीत्यपेलुङि चिणि। प्रबभुरिति भातेर्लिटि ॥ ५२ ॥

सञ्छन्नामात्रासानन्दंराज्ञोभूताचनामा

ऽत्रासा ॥ शोकेनाऽमात्रासाववसद्धृतदेह यापनामात्रासा ॥ ५३ ॥

संछन्नेति—असौ दमयन्ती सञ्छन्ना वपुर्मालिन्यात् दमयंतीति ज्ञातुमशक्या राज्ञः सुबाहोर्मात्रा सानदं यथास्यादेवं भृता नाम पोषिता नाम सम्भावनायाम्।अत्र सुबाहु न्तःपुरे अत्रासात्रासरहिता धृतदेहयापनामात्रा धृतंदेहयापनाशरीरस्थितिमात्रं यया सा तादृशी देहधारणार्थं भुंक्ते न तु सौख्यार्थ मिति भावः।शोकेन अमा शोकसहिता सा भैमी अवसत् वासमकरोत् । यद्वा धृतादेहनिर्वाहमात्रे आशा ययेति सा धृतदेहयापनामात्राशेत्येकं पदम् । अत्र पक्षे यमके शसयोरभेदानदोषाय “ यमकश्लेषचित्रेषु रलयोर्जलयोर्न्नभित्।नानुस्वारविसर्गौचचित्रभङ्गाय संमतौ इतिवत्” ।असौ भैमी सुबाहुमात्रा दमयन्तीत्यनभिज्ञाय सानन्दमपुषत् सा च शरीर रक्षामात्राहाराभूदिति भावः। अवसदिति वसेर्लङि। अत्रेयं भारतवार्त्ता । सायाह्ने भैमी वणिग्भिः सार्द्धं सुबाहुनगरंप्राप्ता अथ प्रासादस्था राजमाता तां दृष्ट्वा धात्रीद्वारा स्वसमीपमानीय का त्वमिति प्रोवाच ततः दमयन्त्याः परिचारिकाहमिति भैम्याह । राजमातोवाच अत्र तिष्ठ ततो भैमी निर्वधं चकार पादसेवनमुच्छिष्टफेटनं न करिष्यामीति ॥ ८३ ॥

पदापदापरिभ्रमन्नयेनयाऽऽपदाऽऽपदा ॥

वनावनाऽवनाथवत्सजीवनावनाभवत्॥५४॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
तृतीयोच्छ्वासः ॥ ३ ॥

पदेति–अपदा अत्राणा अस्थाना वा या दमयन्ती नयेन नीत्या कृत्वा आपदा विपत्त्या पदा चरणेन वनावनौ वनभूमौ अनाथवत्परिभ्रमं पर्यटनमापल्लेभे सा सजीवनावना जीवनं तस्य अवनं रक्षणं तत्सहिता सजीवितरक्षाऽभवत् । या भैमी विपदि चरणाभ्यां वनभूमौपर्य्यभ्रमीत्साजीवनरक्षणंप्रापेति भावः । "पदंघ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । आपदित्यापेर्लेङि "विपत्त्यां विपदापदौ", इत्यमरः अभवदिति भवतेर्लेङि ॥ ५४ ॥

इति श्रीनलोदयकाव्यटीकायां तृतीयोच्छ्वासः ॥ ३ ॥

## चतुर्थोच्छ्वासः ।

अथतुङ्गोपायस्यश्रवणेननलस्यसानुगो
पायस्य ॥ वशगागोपायस्यस्वमनोभी
मश्चिरंजुगोऽऽपायस्य ॥ १ ॥

अथेति–अथाऽनन्तरं तुङ्गोपायस्य तुङ्ग उच्च उपायः सामादिर्यस्य तादृशस्य नलस्य अपायस्यापक्रमणस्य दुःखस्य वा श्रवणेन सानुगः अनुगच्छन्तीत्यनुगास्तैः सहितः सानुचरः चिरं बहुकालम् आयस्य प्रयासं कृत्वा नलान्वेषणाय

भीमःस्वमनः स्वस्य मानसं जुगोप,रक्षितवान् यस्य भीमस्य गोपाः गां भूमिं पांतीति गोपाः राजानः ग्रामौघाधिकारिणो वा गोपजातीया वा वशगा आयत्ताः नलापगमनं श्रुत्वा तदन्वेषणार्थं बहुधा आर्यस्य शोकसहितं स्वहृत्कथञ्चिदरक्षत् । "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि । ग्रामौघाधिकृते पुंसि"इति मेदिनीकारः ।"स्थायुकोधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु"इत्यमरश्च ॥ १ ॥

निशिचदिवाचार्य्यस्यक्षतस्यनलविचिन्त
येऽथवाचार्य्यस्य ॥ भृशमेवाचार्यस्य
द्विजोत्तमैश्शिष्यकैरिवाचार्य्यस्य ॥ २ ॥

निशीति—अस्य भीमस्य वाचा वचनेन द्विजोत्तमैर्ब्राह्मणश्रेष्ठैर्नलविचिन्तये नलान्वेषणाय निशि रात्रौ च दिवा च दिवसे भृशमेवात्यर्थमेव अचारि नानादेशसञ्चरणमकारि। कीदृशस्यास्य अर्यस्य क्षतस्य अरेः असयः अर्यसयस्तैः शत्रुखड्गैरताडितस्य एवमार्यस्य श्रेष्ठस्य आचार्यस्यगुरोर्वचसाशिष्यकैरिवशिष्यैरिव । स्वार्थे कः । शिष्या यथा गुरोराज्ञयाऽहर्निशं सञ्चरन्ति तथेत्यर्थः ॥२॥

अथनयनेत्रासादिप्रचुरापूःकेनचिज्जने
त्रासादि ॥ यत्रसुनेत्रासादिग्भ्रमेणदुःखं
गतावनेत्रासादि ॥ ३ ॥

अथेति—अथानन्तरम् अत्र जने विषये केनचिदनिर्व-

चनीयचतुरेण सुदेवनाम्ना द्विजेन नयनेत्रा नीतिनिपुणेन सादिप्रचुरा सादिनोऽश्ववाराः प्रचुरा यस्यां सा पूः आसादि प्राप्ता । सा का यत्र पुरि सा सुनेत्रा भैमी वर्त्तते इति शेषः । कीदृशी सा वने दिग्भ्रमेण दिग्भ्रांत्या त्रासादि त्रासपूर्वकं दुःखं गता प्राप्ता । दिग्भ्रमेणेत्यत्र आदिक्रान्त्या इति पाठे यत्र पुरि आदिक्रान्त्या प्रथमप्रवेशेन जने लोके त्रासादि भवति यत्र पुरि वने दुःखं गता सा सुनेत्रा आसीदित्यर्थः ॥ ३ ॥

सहदीनाऽऽयततेनस्वगृहंचभैमीययेऽमुना यततेन ॥ स्वनयेनायततेनप्राप्त्यैस्वासो श्रशोभनायततेन ॥ ४ ॥

सहेति–दीना दुःखिता भैमी तेन द्विजेन सह स्वगृहम् । आयत गतवती । चेदिपुरीनिलयं ब्राह्मणं गृहीत्वा स्ववासस्थाने गतवती।आयततेन धनागमव्याप्तेनाऽमुना द्विजेन सह भैम्या यये । भीमगृहमिति शेषः । चेदिराजदत्तधनवता द्विजेन सह भैमी भीमगृहमगादिति भावः । यद्वा नलान्वेषणाय भीमदत्तबहुधनवता विप्रेण भैम्या सह चेदिगृहं यये इत्यर्थः । शोभना सा भैमी स्वनयेन स्वनीत्या अयततेनप्राप्त्यै अयः शुभविधिस्तेन ततो व्याप्तो य इनः स्वामी नलस्तस्य प्राप्त्यै यतते स्म यत्नमकरोत् । स्वासोः स्वकीयप्राणस्य प्राप्त्यै न यततेस्म । अत्रेयं भारतवार्त्ता ।

सुनन्दान्तःपुरे समागतं सुदेवं ब्राह्मणं दृष्ट्वा
रुरोद । सुदेव उवाच। अहं तव भ्रातुःसखा सुदेवनामा
वचनात् त्वामन्वेष्टुमागतः । तव बान्धवास्त्वां विना
इव तिष्ठन्ति । ततो राजमातरं सर्ववृत्तान्तमकथयत्
सुबाहुमाता च नलपत्नीं दमयन्तीं ज्ञात्वा
यामास । सुनन्दा तु निश्चयार्थं तस्या गात्रमलं
शिरस्यर्द्धचन्द्राकारं गरुडलाञ्छनं ददर्श । तच्चिह्नेन
ज्ञात्वा मम भगिन्याः कन्या त्वमित्युक्त्वा त
ङ्कृत्यामात्यैः सुदेवेन च सहितां दमयन्तीम्पितृगेहं प्राप
तत्र सा पुत्रादिभिः सह युयोज । भीमश्च सुदेवाय
पुनः प्रणामं कृत्वा बहुधनानि ददौ । ततो
म्पुनर्ब्राह्मणान् प्रेषयामासेइति ॥ ४ ॥

नयमेवाह–

शस्यस्तेन ॥
नभृतेनभवसिशस्यस्तेन ॥ ५ ॥

वसनेति–हे वसनांशस्य वस्त्रखण्डस्य स्ते यज्जने
क्वासि मम दमयन्त्या अयं विधिः वनगमना णदुःखं
न यशसे न। हेप्रिय अस्तेन त्यक्तेन स्वज
छद्म कपटं विशसि प्राप्नोपि भृतेन पालितेन

कोप्यूचइति—तेष्वन्वेषकेषु मध्ये कोप्यन्वेषकजनः इतनयायाः इतः प्राप्तो ज्ञातो वा नयो यया तादृश्याः ज्ञातनीतेर्नृपस्य भीमस्य तनयायाः पदं स्थानमेत्य ऊचे उक्तवान् हेदमयन्ति त्वां भीर्भयं मुञ्चेत त्यजेत्।अर्त्तिःपीडा च नयायान्नप्राप्नुयात्। भयमार्तिश्च न भविष्यतीति यावत्। या अर्त्तिः चे तनया बुद्ध्या दुःसहा सोढुमशक्या। हेदमयन्ति त्वां भयंपीडा च हास्यति। नलो मया लक्षित इत्यवोचदिति भावः। "पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुषु"। "भीतिर्भीसाध्वसं भयम्" इत्यमरः। "मुच्लृमाक्षेणं"इत्यस्यालिङ्व्यात्मनेपदेशेमुचादीनामिति नुमि मुञ्चेतेति रूपम्। "मतिर्म्मनीषाबुद्धिर्धीर्द्धिषणाज्ञप्तिचेतने" इतिहेमचन्द्रः। "आर्त्तिः पीडा धनुःकोट्योः" इत्यमरः ॥ ७ ॥

निजधामेतंसमयामृतुपर्णश्रावितोऽर्थमे
तंसमया ॥ सचिवसमेतंसमयागिरोत्तरं
नाजनिष्टमेतंसमया ॥ ८ ॥

निजेति—हेदमयन्ति निजधामेतं निजस्थानमयोध्यातत्रेतंतत्रस्थितम् अयोध्याधीशम् ऋतुपर्णम् ऋतुपर्णनामानं राजानं समया समागतः। स च मया एनम् अर्थं वसनस्तैन्यादिरूपमर्थं वाच्यं समया सश्रीकया समया अनतिनिम्नोन्नतया गिरा वाचा श्रावितः सचिवसमेतं मंत्रिसमेतं तथा मेतं मां लक्ष्मीम् इतं प्राप्तम् ऋतुपर्णं समया मंत्रिसहितस्य ऋतु-

पर्णस्य समीपे उत्तरं प्रतिवाक्यं नाऽजनिष्ट न जातं हेभैमि वसनस्तेयादिकं त्वदुक्तं श्रावितः ऋतुपर्णः । मंत्रिसहितस्य तस्य समीपे उत्तरं च नावाप्तमिति भावः। "अभितः परितः समया०"इति । द्वितीया ऋतुपर्णमिति। "मंत्रीधीसचिवोऽमात्यः"।समयामितिसंयातेर्लङि। "समयान्तिकमध्ययोःइत्यमरः । अजनिष्टेति दीपजनं" इत्यादिनाचिण्विकल्पे-रूपम् ॥ ८ ॥

दीनानायतनस्थोनानायतनक्षमोऽस्यसौ त्येधिकृतः ॥ नाऽनायतनकरोलीनाना यतनःपथ्युवाचाथरहः ॥ ९ ॥

दीनेति—अथानन्तरमस्य ऋतुपर्णस्यायतनं गृहंतत्र स्थितः सौत्ये सारथ्येऽधिकृतः अनायतनकरः न आयतो दीर्घः करो हस्तो यस्य तादृशः कुब्जो ना पुरुषः पथि लीनान्मार्गे लग्नान् गच्छतःनोऽस्मान् दीनान्दुःखितान् रहः विविक्ते आयत आगतवान् इति उत्तरश्लोकेवक्ष्यमाणं च उवाच अवादीत् । कीदृशः नानायतनक्षमः नानाप्रयत्नसमर्थः त्वदुक्तं श्रावयित्वाऽप्राप्तोत्तरान्मार्गे गच्छतोस्मान् सङ्कुचितकरस्तत्सूतो रहसि एत्येदमुवाचेति भावः । "गुणवचनब्राह्मणादिभ्यः कर्म्मणि च"इति ष्यञि सौत्यः।"सूतस्त्वष्टरिसारथी"।आयतेति"अयगतौ" इत्यस्य लङि। "मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथोअथ"। "रहोंतिकमुपह्वरे"।यद्वा

दीनानायतनस्थ इति नलविशेषणं दीनश्चासौ अनायतनस्थः असम्यगायतनस्थश्चेति तादृशं इत्यर्थः॥ ९ ॥

आगत्य किमुवाचेत्याह—

**दीनायाऽनायतयाविवाससेऽस्मैविहीन यानायतया ॥ नखलुधियाऽनायतया क्रोद्धव्यंधर्म्मनिश्चयानायतया ॥ १० ॥**

दीनेति। दीनाय दुःखिताय अनायतया आयो धनागमः न आयो यस्यासावनायस्तद्भावस्तत्ता तया। धनागमरहितत्वेन विवाससे वस्त्रहीनाय तस्मै वसनस्तेनाय । एवं विहीनं त्यक्तं यानं येन तादृशाय । अनायतया अदीर्घतया अविचारपूर्विकया धिया बुद्ध्या तया दमयन्त्या न क्रोद्धव्यं क्रोधो न कर्त्तव्यः । खल्वनुनये।तया कया।या धर्म्मनिश्चयान् धर्म्मनिर्णयानायतज्ज्ञातवती याऽतिधार्म्मिकी । धनागमरहितत्वेन दीनाय वसनहीनाय च तस्मै नलाय तया दमयन्त्या क्रोधो न करणीयः । दैववशादेतत्सर्वमभूदिति भावः "क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रतिकोपः" इति सम्प्रदानत्वाच्चतुर्थी । अस्मैइति। आयतेति "अयगतौ" इत्यस्य लङि ॥ १० ॥

प्रेष्यद्विजआह—

**कृतकर्माऽनेनत्वागतोऽस्मिवचसेतितस्य मानेनत्वा ॥ वेदयमानेनत्वाविप्रेचधनेषुदीयमानेनत्वा ॥ ११ ॥**

कृतेति—हेदमयन्ति मानेन प्रमाणेन सत्येन तस्य पुरुषस्य अनेन वचसा वचनेन कृतकर्म्मा कृतकार्य्योहं त्वा त्वां प्रत्यागतोस्मि इति वेदयमाने बोधयति द्विजे ब्राह्मणे नत्वा नमस्कृत्य धनेषु दीयमानेनत्वा दीयमानमिनत्वं स्वामित्वं यथा तादृशी । धनेषु दत्तस्वामित्वासीदित्यर्थः । अहं तस्य पुरुषस्य सत्येन वचसा कृतकृत्यस्त्वत्समीपमागतइति वदति विप्रे नमस्कृत्य बहुधनस्वामित्वमकार्षीदित्यर्थः। "इनः सूर्यें प्रभौ राज्ञि"। अत्रेयं पुराणवार्त्ता । दमयन्ती च नानास्तुतिं कृत्वा पर्णादनामानं ब्राह्मणम् ऋतुपर्णराजसारथिनिकटे श्लोकचतुष्टयं दत्त्वा प्रेषयामास। स च तत्र गत्वा तस्मै श्लोकान्ददौ । श्लोका यथा । क नु त्वं कैतवैश्छित्वा वस्त्रार्द्धं प्रस्थितोमम । उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ १ ॥ सा वै यथा समादृष्टा तथा स्तेऽऽत्वत्प्रतीक्षिणी । दह्यमाना भृशं बाला वस्त्रार्द्धेनाभिसंवृता ॥ २ ॥ अस्या रुदन्त्याः सततं तेन शोकेन पार्थिव । प्रसादं कुरु वै वीर प्रतिवाक्यं ददस्व च ॥ ३ ॥ मा कुरुष्व प्राणनाथ विफलं जीवनं मम । यदि तिष्ठन्न वक्तासि स्त्रीहत्या त्वामभिस्पृशेत् ॥ ४ ॥ इति पर्णादब्राह्मणाद्वृत्तान्तं श्रुत्वा नल उवाच । क नु सा क्षुत्पिपासार्त्ता श्रान्ता शेते तपस्विनी । स्मरन्ती तस्य मन्दस्य कं वा सा द्योपतिष्ठते इति कथयि-

त्वा श्लोकपंचकं प्रस्थापयामास । यथा—वैधव्यमपि संप्राप्य गोपयंति कुलस्त्रियः । आत्मानमात्मना सद्यो जितस्वर्गा न संशयः ॥ १ ॥ रहिता भर्तृभिः सद्यो न क्रुध्यन्ति कदाचन । प्राणाँश्चारित्रकवचान् धारयन्ति कुलस्त्रियः ॥ २ ॥ विषमस्थेन मूढेन परिभ्रष्टसुखेन च । यत्सा तेन परित्यक्ता न तत्र क्रोद्धुमर्हसि ॥ ३ ॥ प्राणयात्राम्परिप्रेप्सोः शकुनैर्हृतवाससः । आधिभिर्हन्यमानस्य न श्यामा क्रोद्धुमर्हसि ॥ ४ ॥ सत्कृताऽसत्कृता वापि पतिं दृष्ट्वा यथागतम् । राज्यभ्रष्टं श्रियाहीनं न श्यामा क्रोद्धुमर्हसि ॥ ५ ॥ इति श्लोकपञ्चकं नीत्वा आगत्य दमयंतीं श्रावयामास पर्णाद इति ॥ ११ ॥

तत्राऽपर्णाऽयततस्वनयाद्भैमीतपस्यपर्णा
ऽयतत ॥ तुलितसुपर्णायततस्तस्याऽऽग
मनायसर्त्तुपर्णायततः ॥ १२ ॥

तत्रेति—ततस्तदनंतरं तत्र तस्मिन्काले ततोऽयोध्यायाः "पञ्चम्यास्तसिल्" सर्त्तुपर्णाय ऋतुपर्णसहिताय तस्य नलस्यापर्णाय अपगतमृणं यस्मिंस्ताहशाय नलप्रेरितहयानामेकदिवसेन बहुयोजनाध्वलंघनादृणापगमः । तुलितः सुपर्णो गरुडो येन तादृशाय आगमनाय तपसि शरीरसन्तापलक्षणे एकभक्तोपवासादौ अपर्णा पार्वतीव भैमी दमयन्ती ततस्वनयात् ततो विस्तृतो यः स्वनयः

स्वनीतिस्तस्मादयतत यत्नं समास्थित । तदनन्तरं दमयन्ती बहुविशालस्वनीतिरयोध्यातो नलस्य सऋतुपर्णस्याऽऽगमनाय यत्नं कृतवतीति भावः । "स्यादृणंपर्य्युदञ्चनम्" । "ऋणमाधमर्ण्ये"इतिनिपातः।"यतीप्रयत्नइत्यस्य"लङि१२

साकृतसामाऽन्येनश्रावितवत्यमुमनन्यसामान्येन ॥ स्वंरहसामान्येनस्वयम्वरंस्मरतिनाञ्जसामान्येनः ॥ १३ ॥

साकृतेति–कृतसामा कृतं साम सांत्वं यया तादृशी साऽनन्यसामान्येन अन्यासाधारणेन अन्येनापरेण मान्येन पूज्येन विप्रेणाऽमुमृतुपर्णं रहसा एकांतेन स्वं स्वकीयं स्वयंवरं श्रावितवती अशिश्रवत्।पूर्वंपरिणीता परिणयनांतरं कर्त्तुं कथं प्रवर्त्तते । तत्राऽऽह । मानी अभिमानी अञ्जसा झटिति एनः पापं न स्मरति । सा दमयन्ती अन्येन केनापि द्विजेन स्वं स्वयंवरमुपह्वरे ऋतुपर्णं श्रावितवती । यतो मानी झटिति पापं न स्मरति । ऋतुपर्णः स्वयम्वरं श्रुत्वा शीघ्रमेष्यति।तेन सह नलोप्यागमिष्यतीति भावः।"स्राग्-झटित्यञ्जसाह्नाय द्राङ्मङ्क्षुसपदिद्रुते"।"स्वोज्ञातावात्म-निस्वंत्रिष्वात्मीयेस्वोऽस्त्रियांधने।इत्यमरः अत्रेयं । पुराण वार्त्ता । दमयन्तो मातरमुवाच । सुदेवो यातु । ऋतुपर्णं वदतु । भैमी पुनः स्वयंवरं करिष्यति । स तु श्वो भावी । यदि द्रष्टुमिच्छातदागच्छ । ततः श्रुत्वा तन्माता तथाऽ

करोत् । ऋतुपर्णोऽपि सुदेवात् तच्छ्रुत्वा गमनं
नलेन परामृशत इति ॥ १३ ॥

रहसितदासन्नाहस्थितःस्मसनलंयुतोमु
दासन्नाह ॥ श्रीस्तुमदासन्नाहस्फुटंप्रया
मोवजेदितिव्युदासन्नाऽहः ॥ १४ ॥

रहसीति–तदा सुदेवात्स्वयंवरवृत्तान्तश्रवणकाले स ऋतुपर्णः सन्नाहस्थितः सन्नाहे कवचे स्थितः बद्धकवचः मुदा हर्षेण युतः रहसि एकान्ते नलम् इति आह उवाच । इतीति किम् हे सन् पूज्य अहः दिनं व्युदासं नाशं न व्रजेत् न गच्छेत् । वयं दमयन्तीपुनस्स्वयंवरे स्फुटं प्रव्यक्तं प्रयामो गच्छामः। श्रीस्तु लक्ष्मीस्तु दमयन्तीलाभात्तद्रूपा वा मदसन्ना मदन्तिकगता भवेत् । ह सम्बोधने । रहसीत्यत्र हरसीति पाठे त्वं हरसि वहसि चेत्तदा स्फुटं प्रयाम इत्यर्थः। क्वचितु द्वितीयचरणे स्मरयुतो नलं मुदासन्नाह इति पाठः तत्र स्मरयुतः सन् कामार्त्तः सन् मुदा हर्षेण नलम् आहेत्यर्थः। हे नल मां चेद्धरसि तदाऽद्य प्रयामो भीमपुरम् । दिवसो न नाशं व्रजेत् । अद्यैव मां नय । दमयन्तीं वरितुङ्गन्तव्यमेवेति भावः। "असगतौ" इत्यस्याने कार्थत्वात्। हरसि हृञो लटि । व्रजेत् व्रजेर्लिङि। "समीपे निकटासन्नसन्निकृष्टसनीडवत्" इत्यमरः ॥ १४ ॥

सावनितावध्वानस्त्वग्गुणैःकर्पतिचकेहता

वध्वान ॥ समहस्तावध्वानःश्वइतियो
जनशतंमितावध्वानः ॥ १५ ॥

सेति—सा वनिता भैमी स्वगुणैरात्मगुणैर्वध्वा संयम्य नोऽस्मान् कर्षति आकर्षति । यमके बवयोरैक्यं न दोषाय। "डलयो रलयोश्चैव शसयोर्बवयोस्तथा। वदन्त्येषां हि सावर्ण्यमलंकारविदो जनाः" इत्यालंकारिकवचनात्। च पुनर्वध्वा स्त्रिया के न हताः। अपितु सर्व एव हता इति भावः। समहस्तावत् स स्वयंवरोत्सवः तावत् श्वः आगामि दिवसे इत्यनेन प्रकारेण ध्वानः लोकध्वनिः लोकवार्त्ताऽस्तीति यावत्। न अस्माकं अध्वा मार्गः योजनशतमितो प्रमाणे वर्त्तते। हेबाहुक भैमीस्वयंवरः श्वो भवितेति लोकवार्त्ता। अस्माकं मार्गः शतयोजनमितः। अतः शीघ्रं रथं सज्जीकुरु इति भावः। "नारीसीमंतिनीवधूः"। "बधबंधने" इत्यस्मात् त्कवध्वेति"कृपविलेखन"इत्यस्माद्धौवादिकाल्लटि कर्षतीति मह उद्धव उत्सवः"। "ह्योगतेऽनागतेऽह्निश्वः परश्वस्तु परेद्यवि" "अयनं वर्त्म मार्गाध्वपंथानः" इत्यमरः॥ १५॥

तत्त्वरयाऽमायामः प्रणयैर्यदिमानितात्रि
यामायामः॥नलजायामायामस्मृत्वेत्य
चेक्कदुर्द्धियामायामः ॥ १६ ॥

तत्त्वरेति—हेसूत तत्तस्मात् अनितात्रियामायामः अ-

नितोऽप्राप्तः त्रियामाया रात्रेर्यामः प्रहरो येन तादृक्
त्वरया सम्भ्रमेण मा मां यदि प्रणयेर्नयसि तदा .
समीपं सह वा यामो गच्छाम इति अनेन प्रकारेण
यामायां नलजायाया दमयन्त्याः मायां
अविचिंत्य ऊचे। यतो दुर्धियां दुष्टाः क :
ता धियश्चेति तासां दुष्टबुद्धीनामायामो दैर्घ्यविचारपरंपरा क कुत्र। अपि तु कुत्रापि न। अथ वा दुष्टाः धियो येषां ते तादृशानां पुंसामायामो विचारदैर्घ्यं क। क्वचितु दुर्धियामित्यत्र युवधियामिति पाठः। तत्र यूनां तरुणानां धियां बुद्धीनां क आयामो दैर्घ्यम् अपि तु क्वापि नेत्यर्थः। रात्रिप्रहरमध्ये मां यदि नयसि तदा भैमीस्वयंवरं व्रजामीत्युक्तवान्। दमयन्तीव्याजमजानान एवेति भावः। "दैर्घ्यमायामआनाहः"। "अस्मदो द्वयोश्च" इत्येकत्वे बहुवचनम्। संभ्रमस्त्वरा। "अमासहसमीपेच"। प्रणयेरिति नीञो लिङि। "त्वमौद्वितीयायाः" इति मादेशः ॥ १६ ॥

युग्मकम्—मांभजमानाश्वःस्यान्नूनमसौतत्प्र
चोद्यमानाश्वस्स्याम् ॥ इतिरतिमानाश्वस्याऽ
न्यायमनाशङ्क्यविकृतिमानाश्वस्याम्॥१७॥

मामिति—आदिकुलकम्।तत्प्रचोद्यमानाश्वः तेन बाहुकेन प्रचोद्यमानाः प्रेर्यमाणा अश्वा यस्य एतादृक् चेत् स्यां भवेयं तदाऽसौ दमयंती श्वो नूनं निश्चयेन मां भजमाना आ-

भयंती स्यादिति रतिमानेवंरागयुतः स ऋतुपर्णः अस्यां दमयंत्यामन्यायं परकृत्यभिलाषलक्षणमनाशङ्क्य आश्वस्य आश्वासं प्राप्य आशु शीघ्रं विकृतिमान्मनोविकारवानित्यूचे इति पूर्वश्लोकेनान्वयः। यद्यसौ मां नयति तर्हि श्वः सा मां वृणीतेति परकृत्यभिलाषमबुध्वा विकारवान्नलं तथोवाचेति भावः। "नूनंतर्केऽर्थनिश्चये"। यद्वा रतिमान् नलः मनसि आश्वस्य स्वयंवरवार्त्तां श्रुत्वा उत्पन्नकोपं विचारेण शमयित्वा अस्यान्दमयंत्यामन्यायमनाशङ्क्यअमत्वा चेत् यदि प्रचोद्यमानाश्वः स्यां तदा असौ दमयंती श्वः प्रातःकाले भजमाना स्यात् इति हेतोः आशु शीघ्रं विकृतिमान् रोमांश्चितः बभूवेत्यर्थः ॥ १७॥

अथरथमारावन्तंशस्त्राणिनलःशुभाश्वमारावन्तम् ॥ सजगामाऽरावन्तंनरेन्द्रमारोप्यचगुरुतमारावन्तम् ॥ १८ ॥

अथेति—अथ वचनानंतरं नलः आरावन्तम् आसमंतात् अरं शीघ्रगं अवंतं यद्वा अरम् आरः शीघ्रगतिः तम् अवंतं रक्षंतं यद्वा आसमंतात् अरं शीघ्रं अवंतं गच्छन्तं यद्वा अस्य विष्णोः अरं चक्रं आरन्तमिव अवन्तं गच्छंतम् अतिशीघ्रगामित्यर्थः। तम्। शस्त्राण्यायुधानि अवंतं रक्षंतं शुभाश्वं शोभना अश्वा यस्मिंस्तादृशं गुरुतमः गरिष्ठः आरावः शब्दो यस्य तादृशं रथम् आरगतवान्। च पुनः अरो शत्रो

रश्मीन् संयच्छ। अहं राजगणितं गणयिष्यामि। ततोनल-स्तद्गणयित्वा आह अत्यद्भुतमिदम् । इमां विद्यां मह्यं देहि मत्तोऽश्वहृदयविद्यां गृहाण इतिपरिवर्त्तितामिति।तदाह२०॥

बलजितदेवार्य्याभ्यांविद्याविनिमयोयुग
पदेवार्य्याभ्याम् ॥ संमर्देवार्याभ्यांव्यधा
यिसंस्पृश्यसम्पदेवार्य्याभ्याम् ॥ २१ ॥

बलेति—अथ रथवेगफलगणनकौतुकदर्शनाऽनन्तरंब लजितदेवार्य्याभ्यां बलेन सामर्थ्येन जितः पराजितो देवार्यः देवस्वामीन्द्रो याभ्यान्ताद्दग्भ्यामाभ्यां नलर्त्तुप र्णाभ्यां संमर्दे रणेऽवार्याभ्यां निवारयितुमशक्याभ्यां युग-पदेव एकवारमेव वारि जलं संस्पृश्य सम्पदे श्रिये विद्या-विनिमयो विद्यापरिवर्त्तनं व्यधायि विहितम् । अथ नल-र्त्तुपर्णौ रथादवतीर्य आचम्य विद्याग्रहणंपरस्परं चक्र तुरिति भावः। व्यधायीति धाञो लुङि चिणि "आतो युक्-चिण्कृतोः" इति युकि सति रूपम् ॥ २१ ॥

तदनुद्रुतमक्षमतस्वीकृत्यास्वदहनेऽधिक
तमक्षमतः ॥ श्रितउन्नतमक्षमतःस्फुट
मेवकलिर्नलस्तुनतमक्षमत ॥ २२ ॥

तदिति—तदनु ततः पश्चात् स्फुटम्प्रव्यक्तम् अस्वदहने कलिदहनेऽधिकतमक्षमतः अत्यन्तसमर्थात् "अतोऽस्मात् नलसकाशात्कलिर्द्रुतमेव उन्नतम् उच्चैस्तरम् अक्षं विभीतक

वृक्षं श्रितः प्राप्तः तु पुनः नलः अतः ऋतुपर्णादक्षं स्वीकृत्य अक्षज्ञानं प्राप्य तं कलिं न अक्षमत न विषेहे। ऋतुपर्णादक्षहृदयम्प्राप्य कलिं यावद्भस्मसात्करोति तावन्नलाद्विनिर्गत्य विभीतकतरुमशिश्रयत्। नलस्तु तस्मै चुकोपेति भावः। "पश्चात्सादृश्ययोरनु"। "लघुक्षिप्रमरं द्रुतम्" अक्षमतेति "क्षमूष्सहने" अस्माल्लुङि ॥ २२ ॥

कलिर्नलमाह—

पतितमलसमेतस्याभैम्यारुपिविद्धिमानलसमेतस्याः ॥ आर्त्त्यनलसमेतस्याऽऽश्रितस्यशरणप्रदोनलसमेऽतःस्याः ॥ २३ ॥

पतितमिति—हे नल एतस्यास्तव हृदये विद्यमानायास्तस्या भैम्या अनलसमेऽग्निसदृशे रुपि रोषे पतितमत एवालसं दुःखितं मां विद्धि जानीहि। आर्त्यनलसमेतस्य आसमंताद्या आर्त्तिः पीडा सेवानलस्तत्समेतस्य संयुक्तस्य।आर्त्तिबलसमेतस्येति पाठे आर्त्तेः पीडाया बलेन आधिक्येन समेतस्येत्यर्थः। मे मम आश्रितस्य आश्रयवतः अतः दमयंतीक्रोधात् शरणप्रदः प्राणत्राणदाता स त्वं स्याः भवेः। आः पीडायाम्। दमयंतीरोषाग्निना दह्यमानं मां प्रति किं रोषं करोषि भैमी कोपज्वलितस्य मे शरणं भवेति भावः। "आस्तु स्यात्कोपपीडयोः"। "अर्त्तिः पीडाधनुःकोट्योः" इत्यमरः ॥ २३ ॥

कलिमितिनानामायंनमन्तममुञ्चन्महा

अन्तं नाशकं तं नरेंद्रमृतुपर्णं रथमारोप्यारोहयित्वा भीमनगरं गतवान् । ऋतुपर्णं रथमारोप्य मनयदिति भावः । जगामेति गमेर्लिटि । "मृत्यौ स्वरूपे निश्चयेंतिके"। "अरं शीघ्रे च पुनरन्यवत्" इति मेदिनीकारः ॥ १८ ॥

स्वांसकृतावसनस्यक्षणदूरत्वेनसङ्गतावसनस्य ॥ भूभर्त्तावसनस्यव्यस्मयतरथद्रुतेर्धुतावसनस्य ॥ १९ ॥

स्वांसेति–भूभर्त्ता ऋतुपर्णः स्वांसकृतावसनस्य स्यांसे स्कंधे कृतमावसनमाच्छादनं येन तादृशस्य वसनस्य रथद्रुतेः रथवेगादुत्पन्नस्य असनस्य वायोर्धुतौ कम्पे सति असनस्यासनवृक्षस्य सङ्गतौ सङ्गमे क्षणदूरत्वेन क्षणादेव बहुयोजनान्तरितत्वेन व्यस्मयत विस्मितो बभूव । नलप्रेरितरथवेगवशोद्भवमरुद्धूतोत्तरीयस्य क्षणदूरत्वादृतुपर्णोऽद्भुतायमानमना अभूदिति भावः । "स्कंधो-भुजशिरोंसोस्त्री" इत्यमरः। अस्यतीत्यसनो वायुः समीरपर्य्यायः। यद्वा स्वांसकृतावसनस्येत्यस्य स्वासे "स्वस्कंधे-कृतम् अवसनम् अस्थितिर्येन तस्य रथवेगोद्भूतवायुनोड्डीयमानस्येत्यर्थः । अत्रेयं पुराणवार्त्ता । स्वांसादुत्तरीयेभ्रष्टे राजावाहुकमुवाच । अश्वान् संयच्छ । वार्ष्णेयनामाऽपरसा-

थिः उत्तरीयमानयतु । बाहुक उवाच । बहुयोजनान्तरितं-
ादतो नानेतुं शक्यमिति ॥ १९ ॥

फलगणनादक्षस्यव्यधिततदासोऽश्वनो
दनादक्षस्य ॥ तपसिचनादक्षस्यप्रहप
र्णंहृदयबोधनादक्षस्य ॥ २० ॥

फलेति—स ना पुरुषःऋतुपर्णः अक्षस्य द्यूतस्य हृदय-
बोधनाद्धृदयज्ञानाद्धेतोरक्षस्य कलिद्रुमस्य फलगणना
त्फलपरिसङ्ख्यानादश्वनोदनादक्षस्य अश्वानां नोदना वाह-
नं तत्र दक्षस्य चतुरस्य तपसि च तपोविषये दक्षस्य दक्ष-
प्रजापतिसदृशस्य नलस्य प्रहर्षणमाह्लादनं व्यधित चक्रे ।
यतोयंराजा फलगणनादक्षः । अतः पाशकगणनाकोविदो
पि स्यात् । एतां विद्यां नीत्वा पुनर्जेष्यामीति कृत्वा नलस्य
महाहर्षोभूदिति पर्यवसितार्थः । स ऋतुपर्णो विभीतक-
फलस्येयत्ताकथनादश्वहृदयज्ञस्य नलस्य प्रहर्षणं मन
आह्लादयाञ्चकारेति भावः । "त्रिलिंगस्तुविभीतकः" । "अक्ष
स्तुषः कर्षफलो भूतावासः कलिद्रुमः" । व्यधितेति धाभोर्लु-
ङि "स्थाघ्वोरिच्च" इति "ह्रस्वादङ्गात्" इति सिज्लोपेरूप
म् । अत्रेयं पुराणवार्त्ता । ऋतुपर्णो विभीतकवृक्षं दृष्ट्वा बाहुक
मुवाच । ममात्र गणनाकौशल्यम्पश्य । अस्मिन् वृक्षे पतित
म्पत्रमेकाधिकशतं । फलञ्च तावदेव पतितम् । स्थितानि पत्रा-
णि पञ्च कोट्यः । फलानि द्वे सहस्रे । बाहुक उवाच । वास्मिय

मनानामाऽयम् ॥ कीर्त्तिधनानामायंसद
धातिहरन्तिरिपुजनानामायम् ॥ २४ ॥

कलीति—इत्यनेन प्रकारेण नमंतं प्रणमंतं नानामायं नानाव्याजं कलिं महामना महाशयोऽयं नलोऽमुञ्चत्त्यक्तवान्नामसंभावनायाम् । यं पुरुषं रिपुजनानामाः शत्रुजननमस्काराः हरंति आकर्षंति स पुमान् कीर्त्तिधनानां यशोलक्षणद्रविणानामयं दधाति धारयति । एवं बहुधा नमस्कुर्वंतं कलिं कारुणिकतयाऽत्यजत् । यतः शत्रुनतयो यं वशयंति स यशोधनवान्भवतीति । मुच्लृमोक्षण इत्येतस्य लुङि अमुञ्चदिति । "नाम प्रकाश्यसंभाव्यक्रोधोपगमकुत्सने" । अत्रेयं भारतवार्त्ता । अक्षहृदयं गृहीतवतो नलस्य देहात् कर्कोटकनागविषं वमन् कलिर्निःसृतः तं कलिं नलः शप्तुमुद्यतः ततोऽतिभीतः कलिर्नलमुवाच । त्वं मे शरणं भव मा शपस्व ये जनास्त्वां कीर्त्तयिष्यंति तेषां मत्तो न भयं भवेत् । अहममुं विभीतकवृक्षं प्रविशामि .ततः कारणात् नलस्तम् अक्षमत ततो विभीतकवृक्षं स प्रविवेश। ततःप्रभृति विभीतकवृक्षच्छायाऽपि न गृह्यते इति ॥ २४ ॥

युग्मकम्—अथतुन्नाश्वस्तेनप्रास्थितरा
जामहात्मनाश्वस्तेन ॥ साललनाश्वस्तेन
स्यादितिहसताविरोधिनाऽऽश्वऽस्तेन ॥२५॥

अथेति-अथ कलिगमनानन्तरं विरोधिना कलिना शत्रुणा आशु शीघ्रम् अस्तेन त्यक्तेन आश्वस्तेन विश्रान्तवता दुःखाद्वा आश्वस्तेन आश्वासम्प्राप्तवता महात्मना महाप्रभावेण सा ललना भैमी श्व आगामिदिने ते तव किन्न स्यादपि तु स्यादेवेति। व्याजेन सा तव स्त्री न स्यान्न भविष्यतीति मनसिकृत्य हसता तेन नलेन नुन्नाश्वः प्रेरितहयः स राजा ऋतुपर्णः प्रास्थित प्रचचालेति यावत्। विद्योपदेशस्थानात् शेषमार्गमवगाहतेति भावः।"नुन्ननुत्तास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः"। "समवप्रविभ्यः स्थः" इत्यात्मनेपदे "स्थाघ्वोरिच्च" इतीत्वे सिचो लोपे लङि रूपम्प्रास्थितेति। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इति स्थित्यर्थस्य प्रपूर्वत्वे तद्विरुद्धार्थत्वम्।"ह्यो गतेऽनागतेह्नि श्वः" इत्यमरः ॥ २५ ॥

सोऽयमनेनायततामिपइतिनलस्समन्व
नेनायतताम् ॥ वहतिदिनेनायतताम्पुरीं
प्रियेणाऽऽश्रिताअनेनाऽऽनायतताम्॥२६॥

सोयमनेनेति-अयं कलिमुक्तोऽनेना निष्पापो नलः यततां यतीनाम् इष्टः वल्लभः यद्वा इष्टेऽभीप्सिते दमयन्तीदर्शने यततां यत्नं करोतु इतिहेतोर्दिने दिवसेऽनायततामदीर्घतां वहति सति धारयति स नलोऽनेन ऋतुपर्णेन

श्रिता ताम्पुरीं कुण्डिनाख्याम् आयत आगच्छत् आगतवान् । कलिमुक्तो नलो भैमीम्पश्यत्वितीव सकरुणे दिनेऽस्तं गच्छति सति ऋतुपर्णेन सह नलः कुण्डिनपुरं प्रविवेशेतिभावः।आयतेत्ययगतावित्यस्य लङि।"दैर्घ्यमायामः"। वह प्रापणइत्यस्य शतरि रूपं वहतीति ॥ २६ ॥

कर्तुमानन्तेनश्रमइतिनीतोभुवोऽयमानन्तेनः ॥ स्वंधामाऽनन्तेनप्रेम्णाभीमेनजितविमानन्तेन ॥ २७ ॥

कर्त्तुमिति—तेन भीमभूपेन ते तव श्रमो मार्गोद्भवपरिश्रमो माभूदित्युक्त्वा स्वागतमाभाष्य आनन्ता कृतनिर्दिशितनम्रत्वोयंभुवः भूमेरिनः प्रभुरृतुपर्णो मानं पूजां संमानं वा कर्त्तुं विधातुं जितविमानं जितानि विमानानि व्योमयानानि येन तादृशं स्वं स्वकीयं धाम गृहम् अनन्तेन बहुतरेण प्रेम्णा स्नेहेनानीतः प्रापितः तदनन्तरं कृतानतिः ऋतुपर्णस्तेन भीमेन विमानसुन्दरं स्वसौधम्पूजयितुमानिन्य इति भावः।"इनः सूर्ये प्रभौ" "प्रेम स्नेहः"। "व्योमयानं विमानोऽस्त्री"इत्यमरः। "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हैमः । यद्वा तेन भीमेन अयम् ऋतुपर्णः अर्थादस्य श्रमो मार्गोद्भवःश्रम इति हेतोः स्वधाम नीतः । कथंभूतेन मानन्तेन मायाः लक्ष्म्याः अनन्तं विनाशाभावो यस्य तेन स्थिरलक्ष्मीकेणेति यावदित्यर्थः ॥ २७ ॥

सज्जनतामहितस्यव्यग्रेतरलोकसूचिता महितस्य ॥ सद्विषतामहितस्यद्रुतंपुर स्येक्षणात्ततामहितस्य ॥ २८ ॥

सज्जनतेति—स ऋतुपर्णः सज्जनतामहितस्य साधुत्वेन पूजितस्य । यद्वा जनानां समूहो जनता सती चासौ जनता चेति सज्जनता तया महितस्य पूजितस्येत्यर्थः । द्विषतां शत्रूणामहितस्यानिष्टस्य तस्य भीमस्य व्यग्रेतरलोकसूचितामहितस्य व्यग्रेतरे अव्यग्रा ये लोकास्तैः सूचिता प्रकाशिता आसमन्तात् महिता उत्सववत्ता यस्य तादृशस्य पुरस्य कुण्डिनस्येक्षणादालोकनाद्द्रुतं शीघ्रं ततास ग्लानिं जगाम । हि निश्चये । भीमपुरसमृद्धिदर्शनात्तमितोऽभूदिति भावः "मह उद्धव उत्सवः" तमु ग्लानावित्यस्य लिटि ततामेति । यद्वा स नलः तताम ग्लानिं प्राप स्वदैन्यस्मरणादिति भावः । हितस्य इष्टस्य श्वशुरस्य पुरस्य दर्शनादित्यर्थः ॥ २८ ॥

प्रथिततमायामार्याशुचिरथवसतावनुत्त मायामायाम् ॥ चारुतमायामायान्नलः स्मरन्वासमसुसमायामायाम् ॥ २९ ॥

प्रथितेति—अथाऽनंतरं शुचिः पवित्रः कर्कोटकवस्त्रपरिधानान्नलः मायां लक्ष्म्यां शरीरशोभायां वा प्रथिततः मायाः प्रसिद्धतमायाः असुसमायाः प्राणसमायाः दमयंत्याः

मायां व्याजं स्वयंवरमृतुपर्णाह्वानस्वागमनप्रयोजिकां
रन् विचारयन् अनुत्तमायामायाम् अनुत्तमः श्रेष्ठ
दैर्घ्यं यस्यास्ताहश्यां चारुतमायामतिशयरुचिरायां
गृहे वासम् आयात् प्राप । नलो
दमयंत्या व्याजं स्मरन्नुत्तमां वसतिं गतवानिति भावः
"प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः । वसती रात्रिवे-
श्मनोः । सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । दैर्घ्य-
मायामः।"इत्यमरः। आयादिति यातेर्लङि। यद्वा नलः चारु-
तमाया अत्यन्तसुन्दर्य्याः दमयंत्याः वसतौ गृहे वासं मा
आयात् न प्राप । किन्तु रथोपरि तस्थौ । अत्रेयं
वार्त्ता । नलस्तावद्भीमगृहं न ययौ किंतु रथोपरि तस्थौ.
तच्छ्रुत्वा दमयंती प्रासादमारुह्य नलं समीक्ष्य अतिहृष्टा
बभूव इति ॥ २९ ॥

तदेवाह—

तंस्वनयानन्तरसान्निध्यगतमवेक्ष्यनुन्न
यानन्तरसा ॥ अभ्युदयानन्तरसावधित
मुदानैषधप्रियाऽनंतरसा ॥ ३० ॥

तमिति—स्वनयानंतरसान्निध्यगतं स्वस्यात्मनो न-
यो नीतिः स्वयंवरघोषणस्य ऋतुपर्णश्रावणं तदनंत-
रं तदुत्तरकालाविलंबेन सान्निध्यं समीपं गतं प्रा-
प्तं तरसा वेगेन नुन्नयानम्प्रेरितहयं तं नलमवेक्ष्य ज्ञात्वा

अनन्तरसा अनन्तो बहुलो रसश्शृङ्गारः स्तम्भोऽनुरागो यस्यास्तादृश्यसौ दमयन्ती नैषधप्रिया नैषधो नलस्तस्य प्रिया अन्तर्मनसि अभ्युदयान् श्रेयांसि सुखानि वा मुदा हर्षेण अधित धृतवती । स्वनीत्युत्तरकालमागतं नलं बुद्ध्वा दमयन्ती बहुलमानंदमवापेति भावः । "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः । अधितेति धाञो लुङि सिचि ॥ ३० ॥

तन्नुन्नाऽऽलीकेनस्थीयतइत्यत्रसुमुखनालीकेन ॥ किंहीनालीकेनस्वकमित्राकृत्तरिपुजनालीकेन ॥ ३१ ॥

तन्नुन्नेति—कृत्तरिपुजनालीकेन कृत्तानि छिन्नानि रिपुजनानां शत्रुजनानामाली पङ्क्तिस्तस्याः कानि शिरांसि यन तथा सुमुखनालीकेन शोभनमुखपद्मेन हीनालीकेन हीनं त्यक्तमलीकं पापं येन तेन तथा स्वकमित्रा स्वकामुकेननलन किमत्र गृहे ऋतुपर्णावाससौधे केन सुखेन स्थीयत इति हेतोस्तन्नुन्ना दमयन्त्या प्रेरिता साऽऽली केशिनी स्ववयस्यावसतिम् स्वसखी दमयन्ती तस्या निवासवेश्मानयतेत्युत्तरश्लोकस्थेन सम्बन्धः।ऋतुपर्णावासगृहे कथं नलस्तिष्ठतीति ज्ञातुं प्रेपिता सखी तं भैमीगृहमनयदिति भावः।"छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम्।आली सखी वयस्या च । कं शिरोम्बुनोः" इत्यमरः । स्थीयत

इति "द्युमास्थागापाजहातिसां हलि" इतीत्वम् । "
शरपद्मयोः । अलीकं त्वप्रियेनृते" इति कोशः ॥ ३१ ॥

तंसाम्नाऽमानयतः परीक्ष्यबहुधागुणाभि
रामानयतः॥ स्वजनगिरामानयतःस्वव
यस्यावसतिमपिपरामानयत ॥ ३२ ॥

तमिति—भैमीप्रेरिता केशिनीतं नलं साम्नाऽ मा सान्त्वेन सहितं नयतः नीतितः बहुधा नाना प्रकारेण परीक्ष्य नल एवाऽयमिति ज्ञात्वा स्ववयस्याया भैम्याः वसति-म्भवनमपि परामुत्कृष्टां स्वजनगिरा दमयन्ती स्वजनानां गिरा वाक्येनानयताऽऽनीतवती । तं कं यतः यस्मात् नलात् मा नयतः लक्ष्मीः प्रापयतः अर्जयतः अन्ये केपि गुणाभिरामा गुणरमणीया न भवन्ति । यद्वा की-दृशो नलः मानयतः मानेन यतः नियतः मानीत्यर्थः । पुरुषश्रेष्ठं नलं निश्चित्य भैमीप्रेषिता तद्भवनं निनायेति भावः । "बन्धुस्वस्वजनाः समाः" अनयतेति नीञो लङि । अत्र परीक्षायाः पुराणवार्त्ता । भैमी केशिनीमुवाच । गच्छ रथान्तिके बाहुकनामा क एष अत्र मम नानाशङ्का भवति तत्र गत्वा पर्णादवाक्यं श्रावय सा गत्वा बाहुकमुवाच त्वां दमयन्ती पृच्छति यूयं किमर्थमागताः।बाहुक उवाच। तस्याः स्वयंवरं श्रुत्वा अयोध्यात एकाहेनाऽऽगताः । पुनः केशिन्युवाच । कस्त्वं । बाहुक उवाच । असौ वार्ष्णे-

यनामा नलसूत आसीत् नले राज्याद्भ्रष्टे ऋतुपर्णमाश्रितः। अहमप्यस्य सूतः। केशिन्युवाच। वार्ष्णेयो नलवृत्तान्तवित् त्वं वा। बाहुक उवाच। नलं न कोपि जानाति। ततः केशिन्या पर्णादानीतश्लोकपञ्चकं श्रावितं तच्छ्रुत्वा तूष्णीमास। एतत्सर्वं भैम्यै सा कथयामास। भैमी पुनः तामुवाच पुनर्याहि पाकार्थं जलाऽग्नी विना सामग्रीन्देहि। केशिनी तथा कृत्वा नलदत्तश्लोकमेकं गृहीत्वा गता। श्लोको यथा। "मम राज्यं प्रणष्टं यत्तन्नाहं कृतवान्स्वयम्। कलिनैतत्कृतं भीरु यच्च त्वामहमत्यजम् ॥१॥" स कलिरिदानीं मां विमुच्य गतः। तच्छ्रुत्वा भैमी सन्दिग्धा उवाच। पुनर्गत्वा तच्चेष्टामनुभव। सा तथा कृत्वाऽऽगत्योवाच। ईदृक् पुरुषो न क्वापि दृष्टो न श्रुतः यत्स्पर्शे स्वल्पं द्रव्यं प्रचुरं भवति कदापि शिरो न नमति। दुष्करमप्यस्य सुकरं भवति। अपरं च तव पित्रा मांसं प्रेरितं तस्य प्रक्षालनार्थं शून्यकुम्भः प्रेरितः स कुम्भस्तत्स्पर्शात् वारिपूर्णो बभूव। तेन गृहीते तृणे अग्निर्जज्वाल अग्निः स्पृष्टो न दहति तत्करमर्दितमपि पुष्पं न म्लायति। ततः केशिनी इन्द्रसेनं तत्पुत्रम् इन्द्रसेनां च कन्यां नीत्वा ययौ। बाहुकस्तौ दृष्ट्वा क्रोडे कृत्वा रुरोद। क्षणात्तौ त्यक्त्वा ममापि सुतावीदृशौ इति जुगोप सः बाहुकेन पक्वं व्यञ्जनं केशिनीद्वारा आनीयाऽऽस्वाद्य नलोऽयमिति निश्चयमकरोत्।

ततः केशिनीं पुनः प्रस्थाप्य नानास्तुतिं कारयित्वा मानयामासेति ॥ ३२ ॥

युग्मम्—तरसैवाऽसावाऽऽसस्वांविकृतिम हेर्वहन्सुवासावासः ॥ स्थिरभावाऽसाऽऽ वासस्निग्धश्चाऽरंस्तनृपतिवासावासः॥३३

तरसैवेति—सुवासाः शोभनं वासो वस्त्रं यस्य तादृगसौ नलः अहेः कर्कोटकस्य वासो वस्त्रं वहन् परिदधत स्वां विकृतिं विकारं कुब्जत्ववैरूप्यादिलक्षणं तरसैव झटित्येव आस जहौ। सा दमयन्ती स्थिरभावा निश्चलस्वाभिप्राया आस शुशुभे।नृपतिवासे भीमगृहे आवासो निवासो यस्य तादृक् भीमभूपसौधगतःस्निग्धः स्नेहवानरंस्त रेमे।दमयन्त्या सहेति शेषः। "वस्त्रमाच्छादनं वासः" इत्यमरः।आसेति असु क्षेपण इत्यस्य लिटि रूपम् । द्वितीयम् अस गतिदीप्त्यादानेष्वित्यस्य रूपम् । अरंस्तेति रमेर्लेङि ॥ ३३ ॥

नृपधामनिशान्तेनव्यतीत्यभैमीसमाग मनिशांतेन ॥ द्विषतामनिशांतेनश्वशुरो दृष्टः श्रितोत्तमनिशान्तेन ॥ ३४ ॥

नृपेति—नृपधामनि नृपस्य भीमस्य धामनि गृहे शान्तेन क्षमायुक्तेन श्रितोत्तमनिशान्तेन श्रितमुत्तमं निशान्तं गृहं येन तादृशेन । द्विषतां शत्रूणामनिशमन्तो

नाशो यस्मात्तादृशेन तेन नलेन भैमीसमागमनिशां भैमी दमयन्ती तस्याः समागमो यत्र तां निशां रात्रिं व्यतीत्य व्युत्क्रम्य श्वशुरो भीमो दृष्टः। भीमगृहे दमयन्तीसमागमरात्रिं व्यतीत्य प्रातर्भीममद्राक्षीदिति भावः। "निशान्तपस्त्यसदनं भवनागारमंदिरम्" इत्यमरः। "धाम रश्मौ गृहे देहे" इति हेमचन्द्रः ॥ ३४ ॥

धृतजडिमानेहासीदृतुपर्णोऽपिप्रदृश्यमानेहासी ॥ आत्मसमानेहासीदभिपूज्यैनंनलोऽरिमानेहासी ॥ ३५ ॥

धृतेति—ना पुरुषः ऋतुपर्णोऽस्मिन्नात्मसमाने नले आत्मसदृशे प्रदृश्यमाने ज्ञायमाने सति इह भीमसदसि धृतजडिमा धृतजडभाव आसीत्। यद्वा धृतजडिमा न आसीत् अपि तु जडोभूदित्यर्थः। काक्वर्थे नञ्। अरिमानेहासी अरीणां शत्रूणां माने हसितुं शीलमस्येति तादृक्। यद्वा अरिमानेहासी। पोऽन्तकर्मणि धातोः प्रयोगः। अरिमानस्य शत्र्वभिमानस्य ईहा चेष्टा तस्या नाशक इत्यर्थः। हासी हासयुतो नल एनमृतुपर्णमभिपूज्य धनमानादिना सन्तोष्याऽहासीद्व्यसर्जयत्। प्रातः स्वसमाने नले दृश्यमाने ऋतुपर्णो जड इवाऽभूत्। हास्ययुक्तश्च नलः ऋतुपर्णं सम्पूज्य व्यसर्जयत्। "पृथ्वादिभ्य इमनिज्वा" इतीमनिच्। आसीदित्यस्तेर्लङ्। अहासीदिति हाकेर्लुङ्। यद्वा

ऋतुपर्णः कथंभूतः अहासी हास्यरहितः । अथ वा हा इति कृत्वा आसी आसः आक्षेपस्तद्युक्तः हा त्वयि ममापराधो जात इत्याक्षेपयुक्त इत्यर्थः ॥ ३५ ॥

सासुसमासामासस्वयमत्रपुरेनलोऽस्य
मासामास ॥ स्त्रीणामाऽऽसामाऽऽसश्रम
ममुनाऽनायिसुसुखमासामासः ॥ ३६ ॥

सेति—सः अयं नलः अत्र पुरे भीमपुरे स्वयम् आसामास तस्थौ । स्वयमित्यत्र स्वैरमिति पाठे स्वैरं स्वच्छन्दम् आसामासेत्यर्थः । कथंभूतः सासुसमासामा असुना प्राणेन समा असुसमा दमयन्ती तस्याः साम सान्त्वं तेन सहितो दमयन्तीकृतसान्त्वः । आसां स्त्रीणां स्वावरोधवधूनां श्रमम् आस चिक्षेप चिरविरहजं दुःखमपनुनोद। कीदृशेन सुखतुलितमासासुखेन तुलितः समीकृतो माश्चन्द्रो येन तादृशेन। अमुना नलेन मासोऽनायि निन्ये । स नलो विरहपीडितस्य स्त्रीगणस्य क्लेशमपाहार्षीत् । एवं मासोऽप्युत्सवकामेति भावः। "मास्तु मासे निशाकरे" इति हैमः । आसेति असु क्षेपण इत्यस्य लिटि । आगादितीणो लुङि । अत्रेयं पुराणवार्त्ता । स ऋतुपर्णस्तच्छ्रुत्वा नलं ज्ञात्वा साऽपराधः सन्नलमुवाच । मत्कृतमपराधं क्षमस्व दिष्ट्या भार्य्यया सङ्गतोसि । नल उवाच । नापराधस्ते कलिकृतमेवैतत् । अश्वहृदयविद्यां गृहाण स ततस्तां गृहीत्वा अन्येन सार-

थिना अयोध्यां ययौ नलस्तत्र मासमेकं स्थित्वा स्वपुरङ्ग-
त्वा पुष्करमुवाच इति ॥ ३६ ॥

तदेवाह–

अथमहदाऽऽराऽजितयास्वपुरंचम्वानल
स्तदाराजितया ॥ सासिगदाराजितयापु
ष्करमभ्यधादुदाराजितया ॥ ३७ ॥

अथेति–अथाऽनंतरं तदा नल आराजितया अरीणां स-
मूह आरं तेन अजितया अपराजितया सासिगदाराजितया
असिसहिता गदाः असिगदास्तासां राजिः पङ्क्तिस्तया स-
हिता सासिगदाराजिस्तत्त्वेन राजितया शोभितया खड्ग-
दाराजियुक्तत्वेन शोभितया चम्वा सेनया महत् पुरं स्व-
नगरम् आर गतवान् । उदाराजितया उदारा महती या
आजिः संग्रामस्तस्य भावस्तत्त्वं तेन पुष्करम् अभ्यधात्
अभिगतः । स नलस्तदनन्तरं महत्या सेनया पुष्करेण सं-
ग्रामं कर्त्तुंजगामेति भावः । आरमिति "तस्य समूहः" इत्य-
णि "यस्येति च"इतोल्लोपे रूपम् । "पृतनाऽनीकिनी चमूः ।"
आरेति ऋ गतावित्यस्य लिटि । "वीथ्यालिरावलिः पङ्क्तिश्रे-
णीलेखास्तु राजयः । उदारो.दातृमहतोः । स्त्रियः संयत्समि-
त्याजिसमिद्युधः" इत्यमरः ॥ ३७॥

नलः पुष्करमाह–

मयिगहनामायासित्वयामनोनात्रमानि

नामायासि ॥ धनुरवनामायाऽसिद्यूताया
लंक्वचेतनामायासि ॥ ३८ ॥

मयीति-हेपुष्कर त्वया मयि गहना निविडा माया
आसि क्षिप्ता । क्वचित्तु मयि नाना मायासि इति ।
नाना विविधा माया आसि क्षिप्तेत्यर्थः । ...
षये मानिनां मनो हृदयमायासि आयासयुक्तं दुःखितं
तं न अपि तु दुःखीकृतम् । नञ् काक्वर्थः ।
माय धनुरारोपणाय युद्धाय द्यूताय वा अलमसि समर्थो
सि । क्व वा कस्मिन्विषये चेतनां बुद्धिमायासि
सि । धनुरारोपणं वा द्यूतं वा त्वमेकं कुरु येन ते
भिलाषः तद्वद इत्यर्थः । असु क्षेपणे इत्यस्य चिणि
आसीति । यसूपतापेऽस्यायासीति । अस्तेरसीति ।
तेरायासीति । "अलम्भूषणपर्याप्तिशक्तिवारणवाचकम् ।द्यू-
तोऽस्त्रियामक्षवति कैतवं पण इत्यपि"इत्यमरः । यद्वा हेना-
नामाय त्वया मानिना मनः मम चित्तम् आसि क्षिप्तं मायया
मम मनो भ्रान्तमित्यर्थः।अतो मायासि मा पलायस्व"आहू-
तोन निवर्त्तेत द्यूतादपि रणादपि"इति स्मृतेरिति भावः३८॥

इत्युक्तोदेवनतस्सोऽथ्यैभवत्पुष्करःप्रमा
देऽवनतः॥ येनसविभिदेऽवनतःपुराऽवनेः
श्रममपिप्रपेदेवनतः ॥ ३९ ॥

तश्चेतिभावः। "पणोऽक्षेषु ग्लहः" जनीप्रादुर्भावे "ज्ञाजनोर्जा" इति जादेशः अजायतेति । "रजो गुणे स्त्रीपुष्पेपि ।" "पापापराधयोरागः।" यती प्रयत्ने लटि यतते इति। अत्रेयं पुराण वार्त्ता । नलो गत्वा पुष्करमुवाच । राज्यं त्यज नो चेद्युद्धं द्यूतं वा कुरु इत्युक्तः द्यूतमकरोत् । तेन पराजितः प्राणात्यये पादानतः प्राणप्रार्थकोऽभवत् । ततो निष्कपटं ज्ञात्वा तेन सह सौहार्दमकरोदिति ॥ ४० ॥

नलः पुष्करमाह—

अयिभवनेत्रायस्वस्वभुवंपुष्करमुदञ्जने
त्रायस्व ॥ युगबलनेत्रायस्वस्नेहायपुरेव
विमलनेत्रायस्वः ॥ ४१ ॥

अयीति—अयि कोमलामन्त्रणे । हेपुष्कर भवने गृहे निवसन् स्वभुवं स्वभूमिमस्मद्दत्तां त्रायस्व रक्षस्व । अत्र जने जनपदलोके मुदं हर्षमायस्व प्राप्नुहि । युगबलनेत्राय युगस्य युग्मस्य बलं सामर्थ्यं नेत्रं नायकं यस्य तादृशाय विमलनेत्राय निर्म्मललोचनाय स्वस्नेहाय स्वप्रेम्णे पुरेव पूर्वमिव स्वः भवावः । हेपुष्कर त्वं स्वभूमिं रक्ष लोके स्निग्धो भव मम तव च स्नेहः पुरेव वर्द्धतामित्याहेति भावः। त्रैङ् पालन इत्यस्य लोटि त्रायस्व । आयस्वेति अयगतावित्यस्य । स्वः अस्तेर्लटि । यद्वा युगबलनेत्रा आवयोः सेनापतिभ्यां सह स्वभवने अयस्व गच्छस्व ।

आवां पुरेव स्नेहाय स्वः भवावः। कथम्भूताय विमलनेत्राय विमलानि नेत्राणि यस्मिन् तस्मै अन्यत्पूर्ववदित्यर्थः॥ ४१॥

हरिपवनयमानस्यस्वबलादितितुलयतो
ऽनुनयमानस्य॥ स्नेहानयमानस्यप्रण
तिमधात्पुष्करस्सुनयमानस्य॥ ४२॥

हरीति–हरिपवनयमान् हरिरिंद्रः पवनो वायुः यमो धर्म्मराट् तान् स्वबलात्स्वसामर्थ्यात्तुलयतः समीकुर्वतः अनुनयमानस्यानुमानयतः स्नेहान् प्रीतीः अयमानस्य गच्छतः सुनयमानस्य शोभननीत्यभिमानस्याऽस्य नलस्य पुष्करः प्रणतिं प्रह्वत्वं नमस्कारं वा इत्यनेन प्रकारेण अधादकार्षीत्। एवं बहुधा स्नेहं दर्शयतोऽतिवत्सलस्य पुष्करः प्रह्वोऽभवदिति भावः। अधादिति दधातेर्लुङि॥ ४२॥

पुष्करो नलमाह–

अरिसेनानाशस्याऽऽश्रितवत्सलतेऽस्तुचे
तनानाऽशस्या॥ पूरितनानाशस्यास्तो
कयशोभिः कदापिनानाशःस्याः॥ ४३॥

अरीति। हे आश्रितवत्सल आश्रितेषु वत्सल कारुणिक अस्तोकयशोभिः अनल्पयशोभिः पूरितनानाशस्य

पूरिता नाना आशा दिशो येन तादृशस्य ... शस्य अरिसेनायाः नाशोऽवसानं यस्मात्तादृशस्य बलातङ्कस्य ते तव अशस्या न शस्या अशस्या स्तोतुमयोग्या चेतना बुद्धिर्न अस्तु न भवतु । कदापि कस्मिन्नपि काले अनाशः आशारहितो न स्याः न भवेः । हे आश्रितकृपापात्र तवास्तव्या धीर्माभूत् कदाप्याशाव्याघातस्तव मा स्यादित्यर्थः । "आशा तृष्णापि याचना । स्तोकाल्पक्षुल्लकाः" इति कोशः । अस्तु अस्तेर्लोटि । "स्निग्धस्तु वत्सलः" इत्यमरः ॥ ४३ ॥

इतिसननामनलस्यप्रणतोऽङ्घ्रीफुल्लवक्र
नामनलस्य ॥ अहितानामनलस्यप्रय
यौसार्द्धतेननामनलस्य ॥ ४४ ॥

इतीति—इत्यनेन प्रकारेण प्रणतो नम्रः स पुष्करः नलस्याङ्घ्री चरणौ ननाम प्रणतवान् । नाम सम्भावनायाम् । कीदृशस्य नलस्य फुल्लवक्रनामनलस्य फुल्लं विकसितं हर्षस्मेरं वक्रनाम वक्रनामकं रूपं वा नलं कमलं यस्य विकसितमुखपद्मस्य । कीदृशस्य नामनलस्य नमनं नामस्तस्मिन्नलस्य तृणस्य नतौ तृणप्रायस्य । यद्वा नामनं नमस्कारं लाति स्वीकरोति नामनलः तस्य । ला आदाने डप्रत्यये रूपमित्यर्थः । एवमहितानामनलस्य शत्रूणामग्नेः । तेन नलेन सार्द्धं सह प्रययौ गतवान्नलानुवर्त्ती

भूव । एवं विकसितवदनकमलस्य चरणौ ननाम नले-न सह गतवांश्चेति भावः। " नलं पद्मं नलस्तृणे । नाम प्र-काशसम्भाव्यक्रोधोपगमकुत्सने।" इत्यमरः।ननामेति नमे-र्लिटि । क्वचित्तु प्रणत इत्यत्र प्रीत इति पाठस्त-त्र सन्तुष्ट इत्यर्थः । प्रययौ सार्द्धं बलेन नाम नलस्य इति पाठे नलस्य बलेन सैन्येन सार्द्धं समं प्रययौ इत्यर्थः॥ ४४ ॥

युग्मकम्-मुदममुनाऽऽमुक्तेनप्राप्यसुरा
ज्यंमहात्मनामुक्तेन॥धृतनानामुक्तेनरा
ज्यंचिरंप्राशासिविघट्टनामुक्तेन॥ ४५ ॥

मुदमिति-आमुक्तेन बद्धकवचेन त्यक्तेन वा अमुना पुष्करेण सह मुदं प्राप लेभे । महात्मनां महाशयाना-मुक्तेन वचनेन विघट्टनामुक्तेन विघट्टना वियोगस्तेन मुक्तेन त्यक्तेन वियोगहीनेन धृतनानामुक्तेन धृताः नाना मुक्ताः मौक्तिकानि येन तादृशेन नलेन राज्यं राष्ट्रं प्राशासि प्रकर्षेण शिष्टं रक्षितम् । तदनंतरं सकवचेन पुष्करेण सह हर्षं लेभे। महात्मनां वाक्येन निजराज्यं वियोगहीने-नाऽनुशिष्टं नलेनेति भावः। "मुत्प्रीतिः। आमुक्तःप्रतिमुक्त श्च पिनद्धश्चापिनद्धवत्।"इत्यमरः।शासु अनुशिष्टावित्यस्य चिणि लुङि प्राशासीति । " उक्तं भाषितमुदितम्" इत्यमरः॥ ४६ ॥

अरिसंहतिरस्यवनेषुशुचांपदमापदमा पदमापदमा ॥ सुखदंचयथैवजनायहरिं यतमायतमायतमायतमा ॥ ४६ ॥

अरीति—अस्य नलस्याऽरिसंहतिः शत्रुपङ्क्तिः शत्रुसमूहो वनेष्वरण्येषु शुचां शोकानां पदं स्थानम् आपदं विपत्तिमापछेभे । कीदृशी अमा निःश्रीका । एवमपदमा अपदा स्थानरहिता मा लक्ष्मीर्यस्य ः सा अस्थिरलक्ष्मीका इत्यर्थः। यद्वा अपगतो दमो यस्याः सा इत्यर्थः । यतमायतमाय यता गता माया कापट्यं यस्य स यतमायः अतिशयेन यतमायः यतमायतमः तस्मै जनाय सुखदं तं नलं मा राज्यलक्ष्मीरायत आगता । यथैव तादृशाय जनाय सुखदं हरिं कृष्णं मा याति तथेत्यर्थः।यद्वा यतमिति भिन्नं पदम्। यतं नियतचित्तं तम् आयतमाय श्रेष्ठलाभाय आयत। यद्वा आयतमाय अतिशयधनागमाय यतन्तम् आयतेत्यर्थः । नलस्य शत्रुर्वने वसन् दुःखितो बभूव । निर्व्याजलोकसुखदं तं नलं लक्ष्मीरागतवतीति भावः । आयतेत्यय गतौ इत्यस्य लङि।"इन्दिरालोकमाता मा"।"पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु"। "विपत्त्यां विपदापदौ" इत्यमरः । "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" ॥ ४६ ॥

अथाशीर्वादव्याजेन नलोदयकाव्यसमाप्तिं सूचयति-

नलेनपुर्य्यतायतायतायतायतापुरेवसा ॥ स
दायमुन्महामहामहामहास्तसम्पदम्॥४७॥

इति श्रीकालिदासकृते नलोदये सत्काव्ये
चतुर्थोच्छ्वासः ॥ ४ ॥

नलेनेति—नलेन नैषधेन सा पुरी स्त्री या नगरी पुरेव पूर्वमिव अतायत विस्तारिता । कीदृशी पुरी अयतायता अयः शुभदैवं नलस्येति शेषः । तस्य भावोऽयता तया आयता विशाला यदा राज्ञो नलस्य शुभदैवमभूत्तदा यथापूर्वं स्वनगरी विशालाऽभूदिति भावः।यद्वा कीदृशेन नलेन अयतायता अयेन शुभदैवेन तायति पालयति देवब्राह्मणादीनिति शेषः । अयतायन् तेन । यद्वा अयं तायति विस्तारयति तेन सर्वदा स्वशुभशंसकेन । तायृ सन्तानपालनयोः इत्यस्मात्कर्त्तरि शता । यद्वा अयो विद्यते यस्यासौ अयः।अर्श आदिभ्योच्"इत्यच्।तस्य भावोऽयता शुभदैववत्त्वं तामेति प्राप्नोतीत्ययतायन् तेन।इण् गतौ कर्त्तरि शतरि"इणो यण्" इति यण् । अयं नलः उन्महा उद्धततेजाः सदा सर्वकालं सम्पदं लक्ष्मीमहास्त प्राप । कीदृशीं सम्पदम् । महामहाम् । महान्तो महा उत्सवाः यस्यां सा ताम् । सदैवोत्सवपरिपूर्णां सम्पदं लेभे इति भावः । अतायतेति तनु विस्तारे इत्यस्माद्धातोः कर्म्मणि लङि आत्मनेपदे ते परे यकि च कृते "तनोतेर्यक"इति विकल्पेनात्वे च रूपम् । अहास्तेति । "ओहाङ्गतौ" इत्यस्माद्ये गत्यर्थास्ते प्राप्त्यर्था ज्ञानार्थाश्चेति वचनेन प्राप्त्यर्थाल्लुङि आत्मनेपदे ते परे

सिचि कृते रूपम् । पूर्यतेति दीर्घपाठे पूः पुरी यता प्राप्ता। कथंभूता आयता विशालेत्यर्थः । "पूः स्त्री पुरीनगर्य्यौं वा"इत्यमरः ॥ ४७ ॥

इतीति–इति समाप्तौ।कालिदासेति कविनामकथनम् । सत्काव्य इति महाकाव्यभिन्नत्वसूचनम् । उच्छ्वासः श्वाससाध्यः परिच्छेदः । समाप्त इत्यर्थः ॥

मिश्रानन्दकरस्त्वासीन्महोपाध्यायलक्षितः।पुण्यग्रामसभाजेता यष्टा वाणीमयः सुधीः ॥ १ ॥ वेदेनैव विधिं कविं नयरुतैस्तर्केण वाचस्पतिं वेदान्तेन शिवं मनुं स्मृतिभिरैज्योंतिश्चयैर्भास्करम् ॥ व्याकृत्येन फणाधरं क्षितिधरं नागाधिपं छन्दसा धर्म्मौं यस्य विजेतुमञ्चति परं सांख्येन चार्वाकपम् ॥ २ ॥ तत्सूनुः सुकृती क्षितीश्वरकृपापात्रः सुहृत्पालको नानाशास्त्ररतो महापदयुतोपाध्यायसंज्ञान्वितः । सत्तर्कायतकाननोद्यतबलद्वादीन्द्रदन्तावलश्रेणीमर्द्दनचातुरीचणहरिर्विद्याकरो मैथिलः ॥३॥ तस्यात्मजोभूद्विबुधाग्रगन्ताप्रज्ञाकरस्सज्जनतापहन्ता । गुणालयः श्रीशपदानुमन्ता शास्त्रेषु दक्षः कुधियां नियन्ता ॥ ४ ॥ स्वल्पेन शरदा तेन कृता टीका सुबोधिनी । पूर्वाचार्य्यकृतीर्वीक्ष्य सुधियाम्पश्यतां मुदे ॥ ५ ॥

इति मैथिलश्रीमज्ञाकरमिश्रप्रणीतायां नलोदयकाव्यटीकायां सुबोधिन्यां चतुर्थ उच्छ्वासः समाप्तोयम् ॥ ४ ॥

---

समाप्तोऽयग्रन्थः ।

श्रीः।

# विक्रयार्थ–पुस्तकोंका–सूचीपत्र.

| नाम. | की. रु. आ. |
|---|---|
| गीतगोविंदमूल ... ... | ... ०–३ |
| गीतगोविंद राधाविनोद सहित संस्कृत टीका और भाषाटीका ... | ... १–० |
| भामिनीविलासमूल ... ... | ... ०–४ |
| भामिनीविलास महावीरप्रसादकृतभा. टीका | ... १–० |
| माघकाव्य ( शिशुपालवध ) सटीकसंपूर्ण | ... २–८ |
| तथा पूर्वार्द्ध ९ सर्ग ... ... | ... १–४ |
| किरातार्जुनीयकाव्य सटीक ... | ... २–० |
| भर्तृहरिशतकत्रयसंस्कृतटीका और भाषा टीका ग्लेजकागज... ... | ... १–० |
| अमरुशतक ( शृंगार और वेदान्तपर दोटीकास. ) | ०–१० |
| भोजप्रबंध मूल ( राजनीति ) ... | ... ०–७ |
| भोजप्रबन्ध भाषाटीका ... | ... १–४ |
| भोजप्रबन्ध भाषा ... ... | ... ०–८ |
| रघुवंश मल्लिनाथकृत संजीवनी टीका और टिप्पणी सहित जिल्द बँधा ... | ... १–८ |